# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]

प्रधानसम्पादकः

श्रीबलदेव उपाध्यायः, साहित्याचार्यः, एम० ए०

सहायकसम्पादकः

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'




२३ वर्षे १ अङ्कः

# विषयानुक्रमणिका





# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

२३ वर्षः } ज्येष्ठपूर्णिमा, संवत् २०२५ { १ अङ्कः


## रसस्वरूपे काचन दृष्टिः


श्रीपी० एन्० पट्टाभिरामशास्त्री, वाराणसेयसंस्कृतविश्वविद्यालये साहित्यविभागाध्यक्षः।


शरीराणि पोषयितुं मानवा विविधानि भोज्यद्रव्याण्यपेक्षन्ते। तथैव चक्षुरादीनामिन्द्रियाणां मनसो बुद्धितत्त्वस्य च पोषणाय साधनानामपेक्षा भवति। जगन्नियन्ता परमेश्वरोऽपि तांस्तान् प्राणिनस्सिसृक्षुर्नैकविधानि दुग्धप्रभृतीनि जीवनधारणौपयिकानि वस्तूनि प्रथमं संसृज्यानन्तरं प्राणिनस्सृजति। तत्राहाराय जीवनमिति प्रतिपद्यमानाः केचिदवतिष्ठन्ते, जीवनायाहार इति कतिपये। उभयेषां परिणामे भूयान् फलभेदः। प्रथमां कोटिमनुप्रविष्टाः शरीरमिन्द्रियाणि च प्राधान्येन समेधयन्तो भौतिकस्य फलस्य लाभाय चेष्टन्ते। द्वितीयां कोटिमनुप्रविष्टास्तु मनो बुद्धिं च प्राधान्येन पोषयन्त आध्यात्मिकस्य फलस्य लाभाय। यदा शरीरादीनां प्राधान्यं तदा मनोबुद्ध्योस्सहकारिता। यदा च मनोबुद्ध्योः प्राधान्यं तदा शरीरादीनामुपसर्जनता। प्रथमस्य जडविज्ञानाविष्कारः फलम्, द्वितीयस्य च चेतनविज्ञानाविष्कारः। प्रथमः पक्षस्सावसानः सातिशयश्च, द्वितीयश्च निरवसानो निरतिशयश्च। प्रथमपक्षे जननं मरणं च भवतः, द्वितीये च न मरणं न वा जननम्। प्रथमस्तु पुरः पश्यन्नग्रे गच्छति, परं प्रत्यावर्तते। द्वितीयस्त्वन्तः पश्यन्नग्रे याति, न प्रत्यावर्तते। प्रथमो मरणाद् बिभेति, द्वितीयश्च तस्मान्न बिभेति। प्रतिबिम्बं श्लाघते प्रथमः, द्वितीयश्च बिम्बम्। रागद्वेषादयः प्रथमस्यावलम्बः, द्वितीयस्य च शमदमादयः। क्रूरकर्मा हिंसकः प्रथमः, द्वितीयश्चाहिंसकस्साधुकर्मा। प्रवृत्त्युन्मुखो गच्छन् प्रथमस्स्खलति, निवृत्त्युन्मुखो द्वितीयस्स्थिरस्तिष्ठति। अशान्तचित्तः प्रथमः, द्वितीयश्च परमां शान्तिमधिगच्छति। स्वस्वमतिकौशलेन सातिशयेष्वाणविकेषु पदार्थेषूत्पाद्यमानेषु प्रथमः

कथं शान्तिं लभताम्? रागद्वेषादीनामुद्भवस्तस्य नैसर्गिक एव। नित्यनिरतिशयस्य पदार्थस्याविष्कारावसरे शमदमादिसम्पत्समृद्धिः स्वाभाविक्येव।

प्राक्तना अस्माकं महामानसा भारतीया जीवनधारणाय कन्दमूलादीनेवाभ्यवहरन्तो भारतस्य जीवातून् वेदान् निर्मन्थ्य स्वस्वबुद्धिवैशद्येन नाना दर्शनानि शास्त्राणि च प्रवर्तयन्त ऋषयोऽभवन्। तैः प्रवर्तितान्येव तानि बुद्धेः पोषकाणि तत्त्वानि। एतेषु सेव्यमानेषु परमां मनसश्शान्तिं तानि जनयन्तीत्यनुभवः प्राचाम्। एकैकस्यापि जनिमातस्थुषो मानवस्य मनसः शान्तिरावश्यकीत्यत्र मन्ये कोऽपि न विप्रतिपद्येत। प्रकृतिरपि रात्रिरित्येकं वस्तु कल्पयामास शान्तिमवाप्तुम्। यदि दिवा नक्तमिति प्रविभागो नाभविष्यत्, तर्हि जगदेव नावृत्स्यत्। अनवरतं नैकविधेषु वैषयिकेषु कर्मसु व्यापृतानां शरीरेन्द्रियाणां क्वचिद् विश्रामः खल्वावश्यकः। अत एव नक्तम्, तत्र च निद्रेत्येवं प्रविभागः। तस्यामवस्थायां काममिन्द्रियाणि न व्याप्रियन्ते, किन्तु मनो न जोषमास्ते। तस्याप्युपरमाय सुषुप्तिः। अस्यामवस्थायां मानवः परमं सुखमवाप्नोतीति प्रत्यक्षमिदम्। तदिदं सुखं जाग्रदवस्थायामप्यवाप्तुं प्रभुसंमितैश्शब्दैर्दर्शनानि, सुहृत्संमितैश्च तैरनल्पानि पुराणानि, कान्तासंमितैश्शब्दैश्च संख्यातीतानि काव्यानि नाटकानि चर्षिभिस्सन्दृब्धानि। ऋषयः कवयश्चैकामेव तुलामधिरोहन्ति। दर्शनात् खल्वृषयो भवन्ति। विचित्राणां भावानां संस्कृतेस्तत्त्वस्य च प्रख्या दर्शनं कथ्यते। एतादृशे दर्शने श्रवणं मननं निदिध्यासनं चेति भवन्ति त्रीणि कारणानि। तानीमानि यथर्षिभिराश्रितानि तथैव कविभिरपि। तदुक्तं भट्टतौतेन—

नानृषिः कविरित्युक्तमृषिश्च किल दर्शनात्।
विचित्रभावधर्मांशतत्त्वप्रख्या च दर्शनम्॥
स तत्त्वदर्शनादेव शास्त्रेषु पठितः कविः।
दर्शनाद् वर्णनाच्चाथ रूढा लोके कविश्रुतिः॥ इति।

अत एव सांख्यन्यायमीमांसादय इव साहित्यमप्यलङ्कारशास्त्रं नाट्यशास्त्रमित्येवं शास्त्रसंज्ञामलभत। युक्तं चेदम्—हितेन सह वर्तते इति सहितम्, तस्य भावस्साहित्यम्। हितं च वस्तु सर्वस्यात्मैव भवति, स हि निरतिशयप्रेमास्पदः। "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति खलु काण्वास्समामनन्ति। एतादृशं निरतिशयप्रेमास्पदं वस्तु प्रतिपादयितुं यथा शास्त्रान्तराणि प्रवृत्तानि, तथैव साहित्यमपि प्रवृत्तम्। इयांस्तु विशेषः—शास्त्रान्तराणि प्रभुसंमितैश्शब्दैस्तस्य प्राप्तये मार्गमङ्गुल्या निर्दिश्य निवृत्तव्यापाराणि निर्दिष्टे च पथि गन्तुं यत्नोऽस्माभिरेव विधेयः। साहित्यशास्त्रं तु तदधिगमाय क्लृप्ते मार्गे सहृदयानां करं परिगृह्य तान् बहुदूरं न केवलं प्रापयति,

अपि तु रसाम्भोधाववमज्जयति । यद्यपि तस्यामवस्थायामलौकिक्यां चिरं सहृदयान् नावस्थापयति, प्रापकप्रकारेषूपरतेषु लौकिकीमेवावस्थां ते प्रपद्यन्ते, तथाप्येवमेवासकृदनुभवतां सहृदयानां कालान्तरेऽन्तर्मुखत्वमासादयितुमस्ति भूयानवसर इति साहित्यस्य वैशिष्ट्यम् । साध्वी काचन प्रेयसी आ च प्रातः आ च सायं क्लेशसाध्येषूच्चावचं कर्मसु सुभृशं परिश्रम्य गृहान् समागतं क्लान्त्या च समन्वितं प्रेयांसं मधुरमधुरैः सरससरसैश्च वचोभिरातिथ्यैश्च परिसान्त्वयति, कुमार्गगामिनं च तं कुपथान्निवर्तयति, सुशीतलैरपाङ्गैर्मनस्समाकर्षेण गात्रयष्टिस्खलनेन भुजोत्क्षेपणेनाकुञ्चितेन भ्रूविक्षेपणेनान्यैश्च विविधैर्हावैर्भावैश्च सन्तर्पयति, तथैव साहित्यविद्येयमनवरतं दुःखबहुलैर्नश्वरैश्च सांसारिकक्लेशैः परीतं सहृदयं समाकृष्य तस्य श्रवसोर्नयनयोश्च कान्तासंमितशब्दार्थद्वारा सुधाबिन्दूनासिच्य सन्मार्गगामिनं विधाय परां च निर्वृतिं प्रापयति । अत एवालङ्कारशास्त्रनिकेतनस्य प्रधानस्तम्भभूतो मम्मटाचार्यः काव्यस्य प्रयोजनोपवर्णनावसरे यशोऽर्थः शिवेतरक्षतिश्चेति काव्यनिर्मातॄणां प्रयोजनान्युपवर्ण्य लोभनीयायाः संस्कृतेर्व्यवहारस्य च परिज्ञानं स्वस्वरूपावस्थितिरूपं च परमं प्रयोजनं काव्यानि शृण्वतां पश्यतां च व्यवस्थापयन् शास्त्रस्यास्यानितरसाधारणं गौरवमुद्घोषयति । एवम्—

"शब्दार्थौ मूर्तिराख्यातौ जीवितं व्यङ्ग्यवैभवम् ।
हारादिवदलङ्कारास्तत्र स्युरुपमादयः ॥
श्लेषादयो गुणास्तत्र स्वभावा इव रीतयः ।
शोभामाहार्यिकीं प्राप्ता वृत्तयो वृत्तयो यथा ॥
पदानुगुण्यविश्रान्तिः शय्या शय्येव संमता ।
रसास्वादप्रभेदास्स्युः पाकाः पाका इव स्थिताः ॥
प्रख्याता लोकवदियं सामग्री काव्यसम्पदः ।"

इति काव्यस्य लोकानुगुणां सम्पदं बोधयन्तोऽप्यालङ्कारिकाः काव्यजीवातोर्व्यङ्ग्यस्यालौकिकत्वं व्यवस्थापयन्ति । तत्र यथा महति प्रासादे निवसन्तं लोकप्रियं कञ्चन कोट्यधीशं प्रभुं राजानं वा वशीकर्तुमाप्तैरङ्गुल्या निर्दिष्टं मार्गमवलम्बमानः प्रासादस्य द्वारमासाद्य तत्र द्वारपालेन निरुद्धः कश्चन तमेव प्रभुमवगच्छन् चिरं सेवमानः स्वाभिलषितमवाप्नोति । अपरो द्वारपालं परिचिन्वानस्तमुल्लङ्घ्य प्रभो राज्ञो वा बहिरङ्गकार्यकर्तारमेव प्रभुमवगत्य सेवते । अन्यश्च तमपि परित्यज्यान्तरङ्गकार्यकर्तारं तथा निश्चित्य स्वमनोरथं साधयति । इतरश्च तमप्युत्सृज्य प्रभोरङ्गसंरक्षकं तथा मन्यमानः स्ववाञ्छां पूरयति । कश्चित् तु कुशलः

क्रमेण साक्षात् प्रभुमेवाश्रित्य सफलमनोरथो भवतीति लौकिकः पन्थाः; तथैवालङ्कारिकैर्निर्दिष्टे पथि सञ्चरन्तः शब्द एव काव्यं नार्थः, शब्दश्चार्थश्चेत्युभयं काव्यम्, अलङ्कार एव काव्यस्यात्मा नान्यः, गुण एव तथा, रीतिरेव तथा, रसस्यैवात्मत्वं नान्यस्य, ध्वनेरेव तथात्वं न रसस्यैवेत्येवं नैकविधानि मतानि प्रकटयन्तः स्वस्वाभिलषितं प्रसाधयन्ति। तत्राप्यास्वादविषयीभूतो रसोऽनुकार्यरामदुष्यन्तादिगत एव प्रतीयत इति कश्चित्, अनुकर्तृनटगतत्वेनैव तस्य प्रतीतिरित्यन्यः, सहृदयगतत्वेनैव प्रतीतिरित्यपर इत्येवं विविधाः सरणयः। रीतिरेषा दार्शनिकेष्वपि समाना। शरीरमिन्द्रियाणि मनो बुद्धिम् एतदतिरिक्तमहंपदवाच्यं जीवं तदतिरिक्तं चेश्वरं पृथक्पृथगात्मत्वेन साधयन्तो दार्शनिकाः प्रख्याताः। एवं भूयस्सु प्रस्थानेष्वेकस्य पन्थानमपरो नानुसरतीत्येवं विद्यमानायामपि स्थितौ, दार्शनिकानामालङ्कारिकाणां च नायमभिप्रायो यन्मानवा विभ्रान्तचेतसो मिथो विवदमाना रागद्वेषादिभिराविष्टाः परस्परं निन्दन्त ईप्सितस्य वस्तुनोऽधिगमाय मार्गं निश्चेतुमशक्नुवानाः कालं यापयन्त्विति। आपणे नानाविधानि विरुद्धान्यविरुद्धानि च वस्तूनि विक्रयणाय प्रसारयत आपणिकस्य नेदमुद्देश्यं स्याद् यद् ग्राहका वस्तूनीमानि विलोक्यापणस्य पुरतः कलहायमाना अवतिष्ठन्तामिति। विरुद्धवस्तुप्रसारणं हि न मनसः कालुष्यसमुत्पादनाय परिगण्यते। विरुद्धेष्वविरुद्धेषु च सर्वेषु वस्तुष्वनुभूतेषु यद् यस्मै रोचते स तद् परिगृह्णातीति लौकिकी स्थितिः। मनसः शान्तये समैव दृष्टिरुपयुज्यते न विषमा। काकस्य हि विषमा दृष्टिः, न काकवद् भवितव्यमस्माभिः। हंसस्य च समा दृष्टिः, सैवानुसर्तव्या मानवैः। तदैव क्षीरनीरविवेक इव वस्तुतत्त्वविवेको भवितुमर्हति। विवेकेन च मनसः शान्तिः, तया च परमः प्रबोध इति दार्शनिकानामालङ्कारिकाणां चाशयः।

शमार्थं सर्वशास्त्राणि निर्मितानि मनीषिभिः।
य एव सर्वशास्त्रज्ञस्तस्य शान्तं मनः सदा॥

इति वदन् भगवान् व्यासः प्राक्तनानां शास्त्रकाराणामाशयं सगौरवमाविष्करोति।

तत्र 'विभावानुभावसञ्चारिभावसंयोगाद्रसनिष्पत्तिः' इति भारतं सूत्ररत्नं परीक्षितुं रत्नतत्त्वपरीक्षका इव विमर्शकाः शास्त्रकाराः प्रवृत्ताः स्वं स्वं मतमाविरकार्षुः। स्वभावोऽयं रत्नतत्त्वपरीक्षकाणां यद् यो यथा निश्चिनोति रत्नस्य स्वभावं मूल्यं च न तथान्योऽपीति। अवश्यं तत्र न्यूनाधिकभावो भवत्येव निर्णये। निर्णयप्रकारभेद एव न्यूनाधिकभावं प्रति प्रयोजकः, न वस्तुतत्त्वं तत्प्रयोजकम्। तत् त्वेकरूपमेवास्ते। प्रकाराणां भेदेन मिथः कामं विरोधः स्यात्, किन्तु न तेन वस्तुनः कोऽपि विरोधः। चूषणक्रियया चूतफलमास्वाद्य त्वचं बीजं च निरस्यति

कश्चित्। अपरस्तु कर्तनेन त्वचं पृथक्कृत्य फलमास्वाद्य बीजं निरस्यति। कश्चिच्च कर्तनक्रियया सत्वचं फलमास्वाद्य बीजं निराकरोति। एवं प्रक्रियाभेदेऽपि, आस्वाद्यवस्तुनो भेदो न सिध्यति। तथैव काव्येषु रसास्वादप्रकारे ग्रन्थकर्तॄणां मतभेदः। रसास्वादकर्तारः काव्येषु त्रयः परिगण्यन्ते— अनुकार्यो रामादिः, अनुकर्ता नटादिः, सामाजिको डित्थादिः सहृदयश्चेति।

तत्र मीमांसासम्प्रदायानुयायित्वेन कथ्यमाना भट्टलोल्लटप्रभृतयोऽनुकार्यरामादिगतत्वेन रसमभिप्रयन्ति। दाशरथी रामः कौमारावस्थात एव राज्यभ्रंश-विपिननिवास-पितृवियोग-निशिचर-पीडासीतावियोग-वानरसख्य-भीषणसङ्ग्रामादिजनितां दुःखपरम्परां क्रमशोऽनुभवन् शोकेन सन्तप्त आसीदिति कथावस्तु भगवता वल्मीकजन्ममुनिना वर्णितं वयं जानीमः। अन्ततः कथायाः परिणाममपि वयमवगच्छामः। तदिदं कथावस्तु पठतां शृण्वतां पश्यतां वा हृदयमद्यापि द्रावयति, वेपथुं जनयति, रोमाञ्चमुत्पादयति, अश्रूणि निर्गमयति, आततायिनो रावणकुम्भकर्णेन्द्रजित्प्रभृतीन् दूषयितुम्, भ्रातृवत्सलं रामम्, तद्भक्तांश्च भरतलक्ष्मणाञ्जनानन्दनादीन् स्तोतुं च प्रवृत्तिरुपजायत इति प्रत्यक्षं समेषां सहृदयानाम्। कथैव खल्वियम्। कलौ युगेऽस्मिन् रामस्य सीताया वा क्वावसरः? तत्रापि गृहस्य वेदिकायां नाटकशालायां वा वर्तनमस्माकं कथावस्तु पठतां शृण्वतां पश्यतां वा निश्चितमेव। तथापि कुत अमी भावाः पूर्वोक्ता निष्पद्यन्ते? कुशलस्य कवेः प्रवक्तुर्नटस्य वा नैपुण्यातिशयेन वयमेतां दशां प्राप्ता इति नूनं वक्तव्यम्। तत्राप्यद्य ते कवयो न सन्ति, सन्ति च तेषां काव्यानि, विद्यन्ते च काव्यप्रवक्तारः, काव्यार्थाभिनेतारश्च। काव्यान्यस्मान् रोदयन्ति हर्षयन्ति च प्रवक्तारो नटाश्च। शब्दार्थमयेषु काव्येषु रोदनहर्षयोर्जनकत्वं कुशलस्य कवेः सम्बन्धाद् वक्तव्यम्, प्रवक्तृषु नटेषु च तज्जनकत्वं साधुशिक्षयाऽभ्यासेन च स्वीकर्तव्यम्। सामाजिकानां हृदयानि समावर्ज्य कञ्चित् कालं यावत् तेषां मनांसि निश्चलानि विधातुं खलु चेष्टन्ते कवयः प्रवक्तारो नटाश्च। श्रोतारो द्रष्टारो वा सामाजिकास्तेषां त्रयाणां वर्णने प्रवचनेऽभिनये च विद्यमानं पाटवं निशम्य निशाम्य च सुखदुःखमोहमयेषु सांसारिकविषयेषु निमग्नस्य चञ्चलस्य मनसः स्थिरीकरणाय पठने श्रवणे दर्शने चा यथारुचि प्रवर्तन्ते। क्रमशो यदा समाकृष्टचेतसो भवन्ति सहृदयाः, तदा नूनमयं कविः प्रवक्ता नटो वाऽस्मन्मनस्समाकर्षणे पटुरिति बुध्यन्ते। तत्र विशेषतो नाट्यं नटा अनुकर्तारो रामदुष्यन्तादीनां चरितं यथायथमभिनयेन प्रदर्शयितुं यतमानाः साक्षाद् रामदुष्यन्तादीनिवात्मनः प्रकटयन्ति। इमांश्च तेषु तेषु घट्टेषु रामादिसमानरूपतां प्राप्नुवतोऽनुभूय सहृदया अनुकार्यानेव साक्षादुपस्थितान् प्रतिपद्यन्ते। अनुकार्ये दाशरथौ रामे सीतालम्बनकः

शोको विभावादिसम्पातेन प्राप्तपरिपोष आसीदिति यच्छाब्दं ज्ञानं तदेव रामादिसमानाकारमनुकर्तारं पश्यतां सहृदयानां प्रत्यक्षात्मकं जायते। इदं त्वनुभवसिद्धमङ्गीकर्तव्यं भवति यद् ये शोकं नाम कञ्चिद् भावं कदापि नान्वभवन् रामकथां च नाश्रृण्वन्, ते कुशलेन नटेनाभिनीयमानं नाट्यं पश्यन्तोऽपि न समाकृष्टचेतसो भवन्ति। यश्च नटः शोकेनात्यन्तमपरिचितो रामचरितमभिनेतुं रङ्गं प्रविशति, तदभिनयं पश्यन्तोऽपि सहृदया न समाकृष्टचेतसो भवन्ति। चित्तस्य समाकर्षणं नाम न सुकरम्। विविधाभिर्वृत्तिभिराक्रान्तमिदं चित्तं भवति। प्रवाहधर्मिणीयं चित्तवृत्तिः सहृदयानां यावन्न स्थिरीक्रियते तावत् सहृदया अपि साधारणा एव भवेयुः। तत्र च नटस्य कौशलमेवैकं साधनमभ्युपेतव्यम्। एवं तत्कौशलेन स्थिरीकृतचित्तवृत्तिः सामाजिकोऽनुकार्यगतं रसमनुभवन् सन्तृप्तहृदयो भवति। एवञ्च, यश्च रसोऽनुकार्यरामाद्याश्रितस्तमेव नाट्ये कुशलो नटोऽभिनयविशेषेण सामाजिकान् ग्राहयतीति भट्टलोल्लटप्रभृतय आशेरते।

युक्तं चेदम्। आहिताग्निर्यजमानो विविधान् सप्ततन्तून् अनुतिष्ठन् ऋत्विजो वृणीते। ते चाध्वर्युहोतृप्रभृतयो यथाधिकारं सश्रद्धं स्वानि कर्माणि कुर्वन्तो मन्त्रांश्चोच्चारयन्ति। मन्त्रैश्च देवतानां रूपाणि प्रतिपाद्यन्ते। यदि च होता वाध्वर्युर्वा यथायथं मन्त्रार्थमवबुध्य देवतानां गुणान् कीर्तयेत्, तर्हि सामाजिकाः कर्मठा यजमानश्च यज्ञमण्डपे हविर्ग्रहणाय प्रत्यक्षमागतानिव देवानिन्द्रप्रभृतीनवगच्छन्ति। तेन च निर्वृतिं लभन्ते। चित्तवृत्तीनां नियन्त्रणायैव खल्विमानि कर्माणि प्रवर्तितानि प्राक्तनैः। विविधाभिर्धाराभिश्चित्तवृत्तयः कामं प्रवहेयुः, तथापि ता निरुध्य "यज्ञो वै यजमानः" इत्युक्तदिशा यजमानं यज्ञत्वेन भावयन् होता, "अग्निर्वै होता" इति होतारमग्नित्वेनावधारयंश्च यजमानः कर्माणि कुरुतः, तर्हि नूनं प्रेक्षकाः कर्मठा यज्ञे समाकृष्टचेतसः प्रसन्ना भवन्त्येव। अतः प्रेक्षकाणां चेतांसि निश्चलानि विधातुं कर्मानुष्ठातृभिर्यथायथं कर्माणि कर्तव्यानि भवन्ति। तत्र कर्तुर्यजमानस्य कर्मजन्यफलभोक्तृत्वे सत्यपि होतृप्रभृतीनामृत्विजां प्रेक्षकाणां च कर्मठानां मनःप्रणिधानेन विलक्षणा काचन शान्तिस्तृप्तिर्वोपजायत एव। तथैवानुकार्यरामादिगतत्वेन रसे विद्यमानेऽपि नटानामनुकर्तॄणां रामसीतादिभावनाहितचेतसां तेषु च रामसीतादिसमानाकारतामकलयतां सामाजिकानां च रसास्वादोऽप्रतिहत एव। अनुकर्तॄणां नटानां रामसीतादिभावनाविष्टत्वे नृत्तगीतवाद्यानामेकतानतारूपस्य लयस्यानुसरणमपि शिक्षाया अभ्यासस्य चातिशयेनोपपद्यत एव। सामाजिकैरपि नटाभिनयसामर्थ्यात् 'रामः सुखी' 'रामः सीताविषयकशोकवान्' 'दुष्यन्तः शकुन्तलाविषयकरतिमान्' इत्येवमादिचित्तवृत्तिविशिष्टे-

रानन्दोऽनुभूयत एव। कञ्चित् कालं बाह्यजगत्सम्पर्केण विहीना अभिनेतारः सामाजिकाश्च रामैकतानमतयः सन्तः सांसारिकदुःखसम्पर्कशून्या अवतिष्ठन्त इत्यस्यानन्दस्य चमत्कारजनकत्वमप्यव्याहतमेवेति मीमांसकमतानुयायिनः।

अत्रैव नैयायिकसरणिमवलम्बमानाः श्रीशङ्कुकप्रभृतयोऽनुकर्तरि रामादिगतं भावमनुमिन्वन्ति। सामाजिका जानन्त्येव यदिदानीं रामदुष्यन्तादयोऽनुकार्या न सन्ति, तेषां नेपथ्यं धृत्वा नटा एवाभिनयन्तीति। नटस्य कौशलेन सामाजिकानां चित्तवृत्तिश्चित्रतुरगन्यायेन नटेऽनुकार्यगतस्थायिभावमनुमातुं प्रवर्तयति। तं तं स्थायिनमुद्दिश्य नटेन प्रयुज्यमानान् विभावानुभावव्यभिचारिणोऽनुभवन् सामाजिकः 'अयं ( नटः ) रामः, सीताविषयकशोकवान्, अयं दुष्यन्तः शकुन्तलाविषयकरतिमान्, तत्तदनुकूलविभावादिमत्त्वाद्' इति प्रतिपद्यते। पूर्वस्मिन् मते सामाजिको नटं राम इति पश्यति, अस्मिंश्च नटं राम इत्यनुमिनोति। 'प्रत्यक्षपरिगलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः' इति खलु चिरन्तनानामुक्तिः। नटे रामादेरनुकार्यस्यारोपो वा भवतु, अनुमानं वा, पदार्थस्त्वेकरूप एव। मतभेदस्तु पदार्थप्रतिपादनप्रकारभेदात् सिध्यति। न्यूनाधिकभावः प्रकार एव न तु वस्तुनि। नाट्यसम्बन्धी रसो नाट्यरस इति मीमांसकमते, नटाश्रयकत्वेन नाट्याश्रयकत्वं रसस्येति श्रीशङ्कुकमते। प्रथममतेऽनुकार्यगतत्वेऽपि रसस्य नाट्यसंबन्धित्वेन नाट्यरसत्वं नानुपपन्नम्। द्वितीयमते चानुकर्तृगतत्वेऽपि रसस्य नाट्याश्रयकत्वेन नाट्यरसत्वं नानुपपन्नम्। उभयत्र स्थायिनोऽवभास आवश्यकः। नाट्यसम्बन्धित्वेन नाट्याश्रयकत्वेन नाट्यहेतुकत्वेन नटनयोग्यत्वरूपेण वा सोऽवभासताम्। सर्वथाऽवभासस्तस्य सर्वैरिष्यत एव।

ये च रसस्य प्रतीतिमुत्पत्तिमभिव्यक्तिं वाऽनङ्गीकुर्वाणा अभिधायकत्वं भावकत्वं भोगकृत्त्वं चेति व्यापारत्रयं स्वीकृत्य तृतीयव्यापारेण रसस्य भोगो भवति सहृदयानामिति वदन्ति, तेषामपि मतेऽभिधायकत्वव्यापारस्य श्रव्यकाव्याश्रितत्वेन दृश्ये नाट्येऽनुपयोगात्, भावकत्वव्यापारेण नटाभिनयविषयाणां विभावादीनां रामसीतादिसंबन्धपरित्यागपुरस्सरं नायकनायिकासम्बन्धमाश्रित्य साधारणत्वापादनं विधाय तृतीयव्यापारेण रसस्य भोगो वक्तव्यः। अयं च भोगः साक्षात्कारविशेषोऽनुभवस्मरणप्रतिपत्तिभ्यो विलक्षणः। वैलक्षण्ये च तिस्रोऽवस्थाः कारणत्वेन स्वीक्रियन्ते—द्रुतिर्विस्तारो विकासश्चेति। प्राथमिक्यवस्था चित्तस्य द्रुती रजोगुणाधीना, विस्तारो द्वितीयावस्था तमोगुणाधीना, रजस्तमोभ्यामनुविद्धं तत्त्वम्, तदधीनश्च विकासः। तदा भोगः स्वस्वरूपं लभते। भोगावस्थायां सत्त्वस्य प्राचुर्येण स्वात्मचैतन्यरूपां परां निर्वृतिं प्राप्नुवतः

सामाजिकस्य विगलितवेद्यान्तरतयाऽवस्थितिर्भवति । तदानीम्—'अहं रामः सीताविषयकशोकवान्', 'अहं दुष्यन्तः शकुन्तलाविषयकरतिमान्' इत्येवं लोकोत्तरमानन्दमनुभवन् सामाजिको भवति । इयं चावस्था नटेन कुशलेन प्रकाश्यमानानां विभावादीनामनुवर्तनं यावदवतिष्ठते ।

इयमेव पार्यन्तिकी स्थितिरानन्दवर्धनाचार्याणामभिनवगुप्तपादानां च मतेऽपि । भावकत्वभोगकत्वरूपव्यापारद्वयमनङ्गीकृत्यैकेनैव ध्वननव्यापारेण स्वीयं मतं ते प्रतिपादयन्ति । सर्वेष्वपि पक्षेषु सहृदयानां रसप्रतीतिस्तावदस्त्येव । श्रव्यकाव्येषु सालङ्कारैः सगुणैश्च शब्दैरर्थैश्च समर्प्यमाणानां विभावादीनां योगात्, नाट्ये च कुशलैर्नटैः समर्प्यमाणानां तेषां योगात् सामाजिकानां रसप्रतीतिः । इयं क्वचित् प्रात्यक्षिकी, क्वचिदानुमानिकी, क्वचिद् भोजकत्वव्यापारजन्या, क्वचिच्च ध्वननव्यापारोत्थेति भिन्ना भवति । प्रतीतित्वरूपं सामान्यं च सर्वत्राविशिष्टम् । शाखाचन्द्रन्यायेनारुन्धतीदर्शनन्यायेन वा सर्वेऽपि पक्षा उपपादनीयाः । सर्वेषु पक्षेषूद्देश्यं चैकरूपमेव चित्तवृत्तिनिरोधेनानन्दावाप्तिः । तत्र व्यापारसामान्यस्य साध्यम्, साधनम्, इतिकर्तव्यता चेति त्रयमपेक्ष्यते—किं केन कथमिति । श्रौतेषु व्यापारेषु यागादिषु स्वर्गादिकं साध्यम्, यागहोमादिकं साधनम्, अङ्गकलापश्चेतिकर्तव्यता । तथा च वेदो भावकः फलार्थिनः पुरुषस्याङ्गसहितेन यागादिना करणेन यथा स्वर्गादिरूपमानन्दं भावयति, तथैव काव्यं नाट्यं वा भावकं प्रत्यक्षानुमानभोगकृत्त्वध्वननादिव्यापारेण साधनेन गुणालङ्कारौचित्यादिरूपयेतिकर्तव्यतया सामाजिकस्य रसमानन्दं भावयति । तत्र यागो दानं होमः प्रणयनं निर्वापश्चेत्यादीनि श्रौतेषु साधनानि भिन्नानि, इतिकर्तव्यताश्च प्रयाजादयो भिन्नाः, साध्यानि च स्वर्गपशुपुत्रादीनि भिन्नान्यपि तज्जन्यं सुखं त्वेकरूपमेव, तथैव काव्ये नाट्ये च करणानामितिकर्तव्यतानां साध्यानां च भेदेऽपि सुखमेकमेव । हंसतूलिकामञ्चे कश्चन शयानः सुषुप्तिजन्यं सुखं लभते, अपरस्तृणैर्घासैश्च प्रपूरितायां शय्यायां शयानस्तादृशं सुखमवाप्नोति, अन्यश्च कर्कशे स्थण्डिल एव लुठन् तत् प्राप्नोति । सुषुप्तिजन्यं सुखं तु सर्वत्राविशिष्टमेव ।

विमर्शकानां क्वचित् काचिन्न्यूनता परिस्फुरेत् । तेन च मिथो निन्दाव्यापारोऽपि प्रवर्तेत । स्वं स्वं मतमुपपादयन् परं निन्देदेव । किन्तु प्रेक्षकैस्तत्र समां दृष्टिमवलम्ब्य वस्तुतत्त्वं परीक्षितव्यम् न तु निन्दाव्यापारे प्रवर्तितव्यम् । गा अश्वांश्च स्तोतुं प्रवृत्तो वेदोऽपि "अपशवो वाऽन्ये गोअश्वेभ्यः गोअश्वाः पशवः" इत्यजादीन् प्राणिनो निन्दतीति नास्माभिरप्यजादयो निन्दितव्याः । 'न हि निन्दा निन्दितुं प्रवृत्ता, अपि तु स्तुत्यं स्तोतुम्' इति तस्य तात्पर्यं परिकल्पनीयम् । एवमेव रसविषये पूर्वजैः प्रवर्तितेषु मार्गेषु समन्वयात्मिका दृष्टिरवलम्बनीयेति शम् ।



# श्रीमद्भागवतभाषापरिच्छेदः

श्रीचारुदेवशास्त्री

( २२ वर्षे २ अङ्कादनुवृत्तः )

ऋतवानिति विप्रलब्धः ॥१।१५।१६[२]॥

२७. विप्रलब्ध उपालब्धः सोत्प्रासमुक्त इति वार्थः प्रकृते । 'विप्रलम्भो विसंवाद' इति तु कोषः । विप्रलब्धः प्रतारित इति च लोकप्रत्ययः ।

…उप्तमूष्याम् ॥१॥१५।२१[४]॥

२८. 'ऊषः क्षारमृत्तिके'ति कोषः । स्त्रियामूषीति तु नान्यत्र श्रुण्मः ।

केचिद्विकल्पवसनाः ॥१।१७।१६[१]॥

२९. वसते आच्छादयन्तीति वसनाः । विकल्पस्य वसना आच्छादयितार इति विकल्पवसनाः । अभेदवादिन इत्यर्थः । स च महता क्लेशेन लभ्य इत्यवश्यप्रतिपत्तव्यम् । शब्दश्चार्थश्चे-त्युभयमप्रसिद्धं कविकल्पितम् ।

वयांसि तद्व्याकरणं विचित्रम् ॥१।१।३६[१]॥

३०. व्याकरणं शिल्पनैपुण्यमिति विवक्षति । लोके नास्य तत्रार्थे प्रसिद्धिः ।

निर्याति सिद्धेश्वरजुष्टधिष्ण्यम् ॥२।२।२६[३]॥

३१. अत्र धिष्ण्यमिति विमानार्थे प्रयुक्तम् । अमरस्तु—'धिष्ण्यं स्थाने गृहे भेग्ना'विति पठति ।

कथा हरिकथोदर्काः……॥२।३।१४[३]॥

३२. हरिकथोत्तरा इति विवक्षति । लोके तूदर्कशब्दः फलमुत्तरमाह, न तु सामान्येनोत्तरमात्रम् ।

श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः ॥२।३।१९[२]॥

३३. संस्तुतः समानः । अन्यत्र तु संस्तुतः परिचितो भवति । क्वचिद् उपसर्गस्य धात्वर्थानुवृत्तेः संस्तुतः स्तुतपर्यायोऽपि भवति ।

श्रुत्वा हरिस्तमरणार्थिनम् ॥२।७।१६[१]॥

३४. अरणशब्दो वेदे शून्यवचनः यतो लौकिकोऽरण्यशब्दः आत्मानं लभते । अयं तु व्युत्पत्ति-मात्रसमाश्रयो गत्यपरपर्याये शरणेर्थे प्रयुङ्क्ते । एवमन्यत्रापि ।

३५. नारायणं तमरणं मनसा जगाम ॥१०।१६।३०[४]॥ इत्यत्र ।

वीर्यं न पुंसोऽस्त्यजवेगनिष्कृतम् ॥८।८।२१[३]॥

२

३६. कालवेगपरिह्वृतमिति श्रीधरः। तेन अजशब्दः कालवचन उपात्त इति भाति। अत्रार्थे नायमन्यत्र श्रूयते।

एवं सुरासुरगणाः समदेशकालहेत्वर्थकर्ममतयोपि फले विकल्पाः ॥८।६।२८[१-२]॥

३७. विविधः कल्पः फलं येषां ते विकल्पाः। केषाञ्चिज्जातं केषाञ्चिन्नेति वैषम्यवन्तस्ते सुरासुराः। अत्रापि प्रयोगे सैव परोक्षप्रियताऽस्य पुराणकारस्य। विकल्प इति तु तत्पुरुष एव लौकिकः, बहुव्रीहिस्त्वलौकिकः। कल्पः फलमिति च कल्पितोर्थः।

३८. तावच्छिरोऽच्छिनदरेर्नदतोऽरिणाऽऽद्यः ॥८।१०।५७[४]॥ इत्यत्र,

आयोधनं तद्रथवाजिकुञ्जरद्विपत्खरोष्ट्रैररिणाऽवखण्डितैः ॥१०।६६।१७[१-२]॥

इत्यत्र चारिश्चक्रार्थे प्रयुक्तः। स चान्यत्रास्मिन्नर्थे दुरापः।

वणिक्पथा भिन्ननवो यथार्णवे ॥८।११।२५[४]॥

३६. अत्र वणिक्पथा नैगमा उक्ताः। वणिक्पथो विपणिर्भवति हट्टो वा। पुराणोक्तार्थाभ्युपगमे तु वणिक्पथ इत्यत्र पथिञ्शब्दो व्यर्थ इत्यतिरिक्तो दोषः।

स्वायम्भुवं धाम गता अकर्मकम् ॥८।२१।२[४]॥

४०. अत्राकर्मकम् इत्यस्य कर्मभिरप्राप्यमित्यर्थः। शब्दस्तु तं नाह।

त्वं नूनमसुराणां नः पारोक्ष्यः परमो गुरुः ॥८।२२।५[१-२]॥

४१. परोक्ष एव पारोक्ष्य इति स्वार्थे ष्यञन्तोऽन्यत्र दुर्लभः। भावे पारोक्ष्यमिति तु विदितं विदाम्।

दृष्ट्वा त्वरेण निजधोरणतोऽवतीर्य ॥१०।१३।६२[१]॥

४२. धोरणमिति वाहनं भवति। कोषस्थोप्येष शब्दो विरलप्रयोगतमः।

सख्युः सोऽपचितिं कुर्वन्वानरो राष्ट्रविप्लवम् ॥१०।६७।३[१-२]॥

४३. अपचितिरानृण्यमिति श्रीधरः। अत्रार्थबोधे श्रीधरस्याधमर्णा वयम्। साक्षात्प्रयोक्तुर्वा पुराणकारस्य।

अद्य मे निभृतो देहः ॥१०।२८।५[१]॥

४४. धृतः, साफल्यं प्राप्तमित्यभ्यूहति श्रीधरः। यद्वा निभृतः पूर्णमनोरथ इति च स विकल्पयति पूर्वत्रार्थेऽसन्तुष्टः। क्वान्यत्रैतदर्थपरिग्रह इति विचक्षणाश्चक्षीरन्।

ब्रह्मन् यमनुगृह्णामि तद्विशो विधुनोम्यहम् ॥८।२२।२४[१-२]॥

४५. विशोऽर्था धनानीति यावत्। कोषादिपारायणिकोपि कथङ्कारमिममर्थं प्रतीयात्।

यत्सेवयाऽग्नेरिव रुद्ररोदनम् ॥८।२४।४८[२]॥

४६. रुद्ररोदनमित्यनेन रजतमाह। यद्यपि श्रुत्यर्थवादाद्रुद्ररोदनाद्रजतोत्पत्तिर्विदितचरी विदुषां तथापि रुद्ररोदनमिति शब्दो रजतेऽर्थे शक्तो न, प्रसिद्धश्च नेत्यवश्यमूरीकार्यमकामेनापि।

पारमेष्ठ्यान्युपादाय पण्यान्युच्चावचानि च ॥६।१०।३६[३-४]॥

४७. पारमेष्ठ्यानि राजार्हाणीति श्रीधरः। परमेष्ठी राजार्थेऽपीत्यत्र प्रमाणं मृग्यम्।

विचित्रवीर्योऽवरजो नाम्ना चित्राङ्गदो हतः ॥६।२२।२१[१-२]॥

४८. अत्र नाम्नेति सनाम्नेत्यर्थे प्रयुक्तम्। न हीमे समानाभिधेये पदे इति पांसुलपादहालिकोऽपि वेद।

शिग्भिस्त्वग्भिर्दृषद्भिश्च बुभुजुः कृतभाजनाः ॥१०।१३।६[३-४]॥

४६. अत्र शिव इति शिक्यानीत्यर्थे प्रयुक्तम्। प्रसिद्धेरपद्वेषात्।

क्वेदृग्विधाविगणिताण्डपराणुचर्यावाताध्वरोमविवरस्य च ते महित्वम् ॥१०।१४।११[३-४]॥

५०. अत्र परमाणुरित्यनुक्त्वा पराणुरित्युक्तिर्वातायनेऽर्थे वाताध्वशब्दप्रयुक्तिश्च परोक्षप्रियस्यास्य कवेः सदृशी नाम।

वणिङ्मुनिनृपस्नाताः ॥१०।२०।४६[१]॥

५१. अत्र स्नातशब्दः स्नातकेऽर्थे प्रयुक्तः। न हि तेन व्रतसमाप्तिः शक्या गमयितुमिति न गणयति पुराणकारः।

प्रतीवैक्षत् कटाक्षेपैः सन्दष्टदशनच्छदा ॥१०॥३२।६[३-४]॥

५२. अत्र कटाक्षक्षेपेऽपाङ्गवीक्षिते कटाक्षेप इत्यस्योपज्ञा कवेः।

विसर्पदुत्सर्पदसह्यमप्रति ॥८।७।१६[२]॥

५३. अप्रतिशब्दोऽप्रतीकारेऽर्थे। अपूर्वः शब्दोऽपूर्वश्चार्थः।

ते नूनमूतिमविदंस्तव हातलज्जाः ॥८।७।३३[४]॥

५४. हातमित्यप्रसिद्धं दुष्टं च। ओहाङ् गताविल्यस्य निष्ठायां हानमित्येव।

समर्चितो ह्यस्य गृहीतपाणिभिः ॥१।१०।२८[२]॥

५५. गृहीतपाणिशब्देन पाणिगृहीतीमाह। अन्ये तु नैवं ब्रुवीरन्।

विज्ञानशक्तिं महिमामनन्ति ॥२।१।३५[१]॥

५६. महिशब्देन महत्तत्त्वमाह। साङ्ख्यास्तु नैवमाचक्षते।

## व्यवहारदूषणम्

यथा वागन्तरे तथा संस्कृतेपि परम्परीणः पूर्वसूरिभिरादृतोस्ति कश्चिद् वाग्व्यवहारविशेषः। स हि वागात्मा। स न दूषणीयः। अयं तु भूयोविद्योपि तं व्यवहारं केषुचिदस्य पुराणस्य प्रदेशेषु दूषयतीतिताननुक्रम्य दर्शयामः—

अहं पुरातीतभवेऽभवं मुने दास्यास्तु कस्याश्चन वेदवादिनाम् ॥१।५।२३[१-२]॥

१. सप्तमीस्थाने दास्या इति पञ्चमीप्रयोगो व्यवहारं नानुपतति। जायतेः प्रयोगे माताऽधिकरणमभ्युपेयते। तथा चादिकवेः प्रयोगः—

अदृष्टदुःखो धर्मात्मा सर्वभूतप्रियंवदः।

मयि जातो दशरथात्कथमुञ्छेन वर्तयेत् ॥२।२४।२॥ इति।

मम दृशि गोचर एष आविरात्मा ॥१।६।४१[३]॥

२. अत्र दृशोर्गोचर इति व्यासेन दृग्गोचर इति समासेन वा न्यासो व्यवहारानुगः स्यात्।

ववृषुः कुसुमैः कृष्णे ॥१।१०।१६[३]॥

३. ववृषुः कुसुमानि कृष्णे इति वा वक्तव्यम्, अभिववृषुः कुसुमैः कृष्णमिति वा। न तृतीयः पन्थाः समस्ति।

कालरूपोऽवतीर्णोऽस्याम् ॥१।१३।४८[३]॥

४. अवतीर्ण इमाम् इति शिष्टव्यवहारः। अभिषेकाय सलिलमवतीर्णः भुवमवततारेत्यादिषु शतशो महाकविप्रयोगेषु कर्मविभक्तेर्द्वितीयायाः श्रवणात्।

स वा अद्यतनाद्राजन् परतः पञ्चमेहनि ॥१।१३।५६[१-२]॥

५. अत्राद्यतनादह्न इति व्यवहारं विरुन्धे, वैयर्थ्यं च धत्ते। अद्येत्यस्मिन्नहनीत्यर्थे निपातः। अत्राहोरूपे कालेऽधिकरणे द्रव्यं वा क्रिया वाऽऽधेया स्यान्न त्वहरेव। कवयस्त्वत्रार्थे केवलम् अद्येति प्रयुञ्जत इत इति वा।

सम्प्रस्थिते द्वारकायां जिष्णौ बन्धुदिदृक्षया।

* * * *

व्यतीताः कतिचिन्मासास्तदा नायात्ततोऽर्जुनः ॥१।१४।१-२[२-२]॥

६. अत्र सम्प्रस्थितस्य द्वारकां जिष्णोरिति व्यवहारानुपाती वाक्यैकदेश इष्यते। किं च। जिष्णुः प्रस्थितोऽर्जुनश्च नायादित्येवमुक्ते प्रस्थानायानकर्त्रोः पुरुषयोरन्यत्वं भासते, नैकत्वम्। तदनिष्टम्। प्रतिनिर्देशोपि तेनैव निर्दिष्टपूर्वेण नामधेयेन कार्य इति व्यवहार इति तद्विदः।

अमुनैव कलेवरेण ॥१।१५।१२[३]॥

७. अनेनैवेति तु वक्तव्यम् । अदःशब्दस्तु विप्रकृष्टमेवार्थमुपलक्षयेन्न संनिकृष्टम् ।

रेमे स्त्रीरत्नकूटस्थः ॥१।११।३५[३]॥

८. कूटशब्दोऽन्यत्र राशिवचनोऽत्र प्राणिसमूहे व्यवहृतः । सोयं व्यवहारातिपातः ।

मन्दस्य मन्दप्रज्ञस्य वयो मन्दायुषश्च वै ।

निद्रया ह्रियते नक्तं दिवा च व्यर्थकर्मभिः ॥१।१६।९॥

९. अत्र वय इत्यायुरर्थे प्रयुक्तम् । बाल्यादिरवस्थाविशेषो वय उच्यते । त्रीणि चत्वारि वा वयांसि भवन्ति । क्वचिद् वयो यौवनमप्याह ।

······अन्यतमो मुकुन्दात् ।

को नाम लोके भगवत्पदार्थः ॥१।१८।२१[३-४]॥

१०. अन्यो मुकुन्दादिति वक्तुमुचितम् । डतमच्प्रत्ययेन नार्थः ।

······पुनर्न मेऽस्तुऽभूत् पापीयसी धीर्द्विजदेवगोभ्यः ॥१।१९।३[३-४]॥

११. अत्र चतुर्थी न व्यवहारानुपातिनी भवति । विषये सप्तमीष्यते । चतुर्थीप्रयोगस्तु वर्तमानं हिन्दीव्यवहारमनुविधत्ते ।

यदि नः श्रवणायालं युष्मद्व्यवसितं प्रभो ॥१०।८८।३०[१-२]॥

१२. श्रवणायालं श्रोतव्यं श्रवणार्हमिति विवक्षति । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरे योग्यार्थस्यासङ्ग्रहादन्यत्राप्रयोगाच्चेदं व्यवहारदूषणमेव । शक्तिशब्देन च शक्तिमत एव ग्रहणं न शक्यस्येति शक्यार्थतापि न शक्या परिग्रहीतुम् ।

आयुर्हरति वै पुंसामुद्यन्नस्तं च यन्नसौ ॥२।३।१७[१-२]॥

१२-क. अदःशब्देन सूर्यं विवक्षति । वेदे तावदेषा शैली; इदंशब्देन पृथिवी बोध्यतेऽदःशब्देन सूर्यो वा द्यौर्वेति । तामिमां शैलीं लोको नानुसरति, अनुसरति चेत्कश्चित्प्रौढिं व्युत्पत्ति वा दिदर्शयिषुर्बाढं व्यवहारमुच्चरते ।

नाहं न यूयं यद्दतां गतिं विदुः ॥२।६।३६[१]॥

१३. अत्र द्वे वाक्ये । अहं न (वेद) इत्येकम् , यूयं न (वेत्थ) इत्यपरम् । युष्मद्युपपदे समानाधिकरणे धातोर्मध्यमः पुरुष इति समेषामाचार्याणामविप्रतिपत्ति मतम् । अयं तु तन्मते तत्प्रतिष्ठं व्यवहारं च कामतोऽवहेलयति ।

न वा अयं ब्रह्मबन्धुर्विष्णुर्मायाविनां वरः ॥८।२१।१०[१-२]॥

१४. अत्र कुत्सा नाभिप्रेता । अकुत्सायां चास्य ब्रह्मबन्धुशब्दस्य प्रयोगो न । 'ब्रह्मबन्धुरधिक्षेपे निर्देश' इत्यमरश्च । तत्र निर्देश इत्युक्तेरकुत्सायामप्ययं प्रयुक्तो न दुष्येदिति मा स्म शङ्कि। तत्र ब्रह्मणो ब्राह्मणस्य बन्धुर्ज्ञातिरित्यर्थः स्यात् । स च प्रकृते नेष्ट इत्यपाणिपिहितम् ।

यत्र नैसर्गदुर्वैराः सहासन् नृमृगादयः ॥१०।१३।६०[१-२]॥

१५. स्वार्थे णिर्नैसर्गः साधुरपि नान्यत्र व्यवहृत इति न न विदितं विदाम् ।

कृष्णावतारोत्सवसम्भ्रमोऽस्पृशन्मुदा द्विजेभ्योऽयुतमाप्लुतो गवाम् ॥१०।३।११[३-४]॥

१६. स्पर्शयतिरेव वितरणे वर्तते न तु स्पृशतिरणिच्कः । न हि गां स्पृशतीत्युक्ते गां वितरतीति कश्चित्प्रतिपद्यते, अन्यत्र भागवतकारात् ।

पुष्पैः किरन्तो हरिमीडिरे सुराः ॥१०।३६।१४[४]॥

१७. पुष्पाणि किरतेः कर्म भवन्ति कश्चित्पुष्पाणि किरति, कीर्यन्ते वा पुष्पाणि केनचिदिति । पुष्पाणां करणता त्ववाद्युपसृष्टस्य किरतेरुपेयते न केवलस्य । तेन पुष्पैराकिरन्तोऽवकिरन्तो वेति व्यवहार्यं भवतीति न व्यवहारविदो वेद्याः ।

······तूर्यभेर्यश्च जघ्निरे ॥१०।४२।३३[२]॥

१८. वाद्यताडनेऽर्थेऽनुपसृष्टस्य हन्तेः प्रयोगो न व्यवहारमनुसरति। प्रायेणात्रार्थेऽभिहन्तिराहन्तिर्वा प्रयुज्यते ।

रिपवो जिग्युरधुना काल आत्मानुसारिणि ॥१०।५४।१६[१-२]॥

१९. अधुनेति सति जिग्युरिति लिट्प्रयोगेऽब्रह्मण्यमुद्घोषणीयं भवति ।

निवासितः प्रियाजुष्टे पर्यङ्के भ्रातरो यथा ॥१०।८१।१७[१-२]॥

२०. उपमेयैक्येऽप्युपमानबहुत्वं व्यवहारातिगमुद्वेगाय सचेतसाम् ।

सा तज्जुगुप्सितं मत्वा महती व्रीडिता ततः ॥११।९।७[१-२]॥

२१. भृशं व्रीडिताऽत्यर्थं व्रीडितेति तु वक्तुमुचितम् । यथास्थिते तु महतीति प्रथमान्तं विशेषणं सेत्यनेनोद्देश्येनान्वियाद् , विधेयं तु निर्विशेषणं स्यात् । उद्देश्येनानन्वये त्वेतत्पृथग् विधेयान्तरं स्यादनर्थश्चोपनतः स्यात् , सा महती बभूव व्रीडिता च बभूवेत्यर्थप्रसङ्गात् । प्रकृतो वाक्यप्रयोगः प्रचरन्तीं हिन्दीं भूयसाऽनुकरोति । तामनुकुर्वन्त केचन संस्कृतेऽपि प्रयुञ्जते प्राधीताः ।

व्रजामि शरणं तेऽद्य ॥१०।६६।२०[३]॥

२२. अत्रापूर्वो व्यवहारव्यतिक्रमः। शरणमिति रक्षितृपर्यायः। 'शरणं गृहरक्षित्रोः' इत्यमरात्। त्वां शरणं यामीति व्यवस्थितो व्यवहारः। तमिमं व्यवहारं प्रायेणापभ्रष्टवाचो बौद्धा अपि बुद्धं शरणं यामीत्यादि प्रयुञ्जानाः साध्वन्वपालयन् का कथेतरेषाम्। परमभागवतोऽयं भागवतकारः कथं नाम श्रीकृष्णः शरणं ममेति वैष्णवानां महावाक्ये शरणं रक्षितेत्यर्थं विसस्मार, कथं च प्रकृते 'ते' इति षष्ठीं व्यवजहार। षष्ठीप्रयोगश्च वर्तमानं हिन्दीव्यवहारं स्मारयति।

## क्लिष्टान्वयः ( पदवाक्यदुःश्लेषः )

दुःश्लिष्टानि क्लिष्टान्वयानि पदानि झटित्यर्थप्रतीतिं प्रतिबध्नन्ति, निरन्वयानि तु तानि वाक्यस्वरूपमेव विघटयन्ति। अवान्तरवाक्यानि चापि तथाजातीयकान्यर्थावगमं मन्थरयन्तीति नेष्टानि। इत्थम्भूतो दुरन्वयोऽनन्वयो वात्र पुराणेऽविरलः। विस्तरभिया कियत्यश्चिद् दिश उपह्रियन्ते—

पिबत भागवतं रसमालयम्॥१।१।३॥

१. रसाश्रयमिति तु विवक्षति। आलय इति 'लीङ् श्लेषणे' इत्यस्मादाङ्पूर्वादधिकरणे घे प्रत्यये रूपम्। यथान्यासं सामानाधिकरण्यं दुरुपपादम्। श्रीधरस्त्वन्यथार्थापयते यदाह—लयो मोक्षः। अभिविधावाङ्। मुक्तैरपि तत्पानस्येष्टत्वादिति। तन्न। जननमरणादिदुःखान्मोक्षो लय इति नाभिधीयते, किन्तर्ह्यप्ययः। अपीता ब्रह्मणि लीनाः कथङ्कारं भागवतं रसं कामयेरन् रसयेरन् वेति विचारणीयम्। अपि च। भुवि गलितं तत्फलं त्वगष्ठ्यादिरहितं रसरूपमेव, अत एव फलं रसमिति सामानाधिकरण्येनोक्तिरित्यभिमन्यते टीकाकारः। यद्येवं भुवि गलितस्य रजोवकीर्णत्वादपेयता स्यात्, पिबतेति पुराणकृता प्ररोचना चासङ्गता स्यात्। रसाश्रयस्य फलस्य पानोक्तिः कथं घटेतेति चेत्, भवत्पक्षेपि फलस्यैव पानमुक्तं रसत्वं तु तत्रारोप इति यत्किञ्चिदेतत्।

यद्येषोपरता देवी माया वैशारदी मतिः।
सम्पन्न एवेति विदुर्महिम्नि स्वे महीयते॥१।३।३४॥

२. मायेत्यतोऽनन्तरं तदेत्यपेक्षितम्। स्वे महिम्नि सम्पन्न एवेति विदुरित्यन्वयः। महीयत इति पृथग्वाक्यमनन्वयं तिष्ठत्यपार्थकं च भवति। स्वे महिम्नि सम्पत्तेरूर्ध्वं को नाम पूजाधिगमो महत्त्वाधिगमो वा।

शिवाय लोकस्य भवाय भूतये य उत्तमश्लोकपरायणा जनाः।
जीवन्ति नात्मार्थम्·········॥१।४।१२॥

३. य उत्तमश्लोकपरायणा जनास्ते लोकस्य शिवाय भवाय भूतये जीवन्ति, आत्मार्थं न जीवन्तीत्यन्वयः। यत्तदोर्नित्यः सम्बन्ध इति तच्छब्दपरिहारो दूषणम्।

देव्यो ह्रिया परिदधुर्न सुतस्य चित्रम् ॥१।४।५$^{२}$॥

४. अत्र सुतस्येति दुरन्वयम्। सुतस्य पुरतो गच्छतो ह्रिया नेत्यन्वयः।

कथां भगवतीं पुण्यां यदाह भगवाञ्शुकः ॥१।४।२$^{३·४}$॥

५. यामाहेति वक्तव्ये यच्छब्दो नपुंसकमन्वयस्य विघटकः।

यच्छृण्वन्ति गायन्ति गृणन्ति साधवः ॥१।५।११$^{४}$॥

६. यदित्येकवचनं पूर्वत्र श्रुतं नामानीत्येतत् परामृशति। वचनभेदाद् दुर्घटोऽन्वयः।

कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम् ॥१।५।१२$^{३·४}$॥

७. ईश्वरे नार्पितं शश्वदभद्रं सत्त्वशुद्धेरप्यकारणं यत्कर्म तत्पुनः कुत इति योजना। अहो अन्वयदुरूहता। चकारोऽधिकः। अनर्थकपदोपजना वाक्यभेददूषणाऽध्याहारवती वाक्। न चार्पितं कर्मेत्यत्रासमासो वाक्यभेदं प्रयोजयति।

यैः कोपितं ब्रह्मकुलं राजन्यैरकृतात्मभिः।
तत्कुलं प्रदहत्याशु सानुबन्धं शुचार्पितम् ॥१।७।४८॥

८. अत्र पूर्वार्धे ब्रह्मकुलमित्युक्तं कर्म, उत्तरत्र च तदेव कर्तृतया वक्तुमिष्यते। तत्कुलं तेषां राजन्यानां कुलमित्यनुक्तं कर्म। यथाश्रुतं तु तत्कुलं प्रदहतीत्यनेन कर्तृतयान्वेतीति प्रतीयते, सकृदुपात्तस्य ब्रह्मकुलस्य शक्तिद्वयायोगात्। किं च शुचार्पितमिति ब्रह्मकुलं विशिनष्टि, सानुबन्धम् इति च तत्कुलमित्यहो दुरन्वयम्।

पदयोः पतिताश्रुमुख्याः ॥१।१५।१०$^{३}$॥

९. पदयोः पादयोः पतिताया अश्रुमुख्या इति तु ऋजुतरको वाचां मार्गः।

यो नो जुगोप वनमेत्य दुरन्तकृच्छ्राद्
दुर्वाससोऽरिविहितादयुताग्रभुग्यः।
शाकान्नशिष्टमुपभुज्य यतस्त्रिलोकीं
तृप्तामम॑स्त सलिले विनिमग्नसङ्घः ॥१।१५।११॥

१०. अत्यन्तं क्लिष्टान्वयं पद्यम्। योऽरिविहिताद् दुर्वाससो(जायमानाद्) दुरन्तकृच्छ्राद् वनमेत्य शाकान्नशिष्टं (च) उपभुज्य नो जुगोपेत्येकं वाक्यम्। योऽयुताग्रभुग् इति द्वितीयम्। यतः सलिले विनिमग्नसङ्घस्त्रिलोकीं तृप्तामम॑स्तेति च तृतीयम्। यत इति कारणं ब्रूते। यस्मात्

कारणादित्यर्थः । यस्माज्जुगोप तस्मात्सङ्घस्त्रिलोकीं तृप्ताममंस्तेति प्रतीतिं यन्न विवक्षितोऽर्थः, यस्माच्छाकान्नशिष्टमुपबुभुजे तस्मादिति तु विवक्षितः, परं नायं यथास्थिताद् वाक्यसन्दर्भाल्लभ्यते, उपभुज्येति गुणीभूतक्रियाया जुगोपेति प्रधानक्रियाया विशेषणत्वेनान्वयात् । योऽच्युताग्रभुग् इत्यत्र श्रूयमाणो यच्छब्दः सर्वनाम पूर्ववाक्यगतं पञ्चम्या निर्दिष्टं दुर्वासस इति पदं परामृशतीति कवेर्हृदयम् । यथास्थिते तु यो जुगोपेत्यादिवाक्येन सामर्थ्यलाभाय तत्र यच्छब्दोक्तं भगवन्तं कृष्णमेव प्रत्यवमृशेत्, न तु दुरन्तकृच्छ्रादित्यनेन संसृष्टं दुर्वासःपदार्थम् । वस्तुतो मूकस्य भाषेयमिति मूकमाता विजानीयात्किमेष भाषत इति । मूको वा स्वयं संविद्यात् । किमपि वृत्तमतीतमाचिख्यासता कविना तथार्थो निबन्धनीयो यथावृत्तमत्यन्तमज्ञातवतापि जनेनाऽविकलं विशदं च तज्ज्ञातं स्यात् । अज्ञातज्ञापनं ह्याख्यातुः कवेः प्रयोजनम्, न मोहस्यापादनम् ।

अथो विहायेममसुं च लोकं विमर्शितो हेयतया पुरस्तात् ॥१।१६।५[१-२]॥

११. अत्र प्रथमे चरणे लोकयोर्हानमुक्तम्, द्वितीये च पुरस्तादेव हेयतया विमर्शितः (निश्चितः) कश्चिदेक इत्युक्तम् इति परस्परमनन्वयम् ।

कृतदारो जुगोपोर्वीं काव्यस्य वृषपर्वणः ॥९।१८।४[३-४]॥

१२. काव्यस्य वृषपर्वणश्च कन्याभ्यां कृतदार इति श्रीधरो व्याचष्टे । कन्याभ्यामिति सत्यपि न सुलभा पदयोजना । ययातिर्हि कन्ये (कर्मणी) दारान्कृतवान्न तु कन्याभ्यां करणभूताभ्यां तस्य दारकर्म ।

नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः ।
स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः ॥१०।४७।६०[१-२]॥

१३. अत्र श्लोकार्धे कुतोऽन्यासामिति वक्तुमुचितम् । यथास्थिते त्वन्वयो दुर्लभः ।

क्षेत्रज्ञ एतां निनयेत्तमात्मनि ॥२।२।१६[२]॥

१४. अत्र तम् इति तृतीयचरणगतमात्मानम् इत्यनेनान्वेति । एतां बुद्धिं क्षेत्रज्ञ आत्मनि निनयेत्, तं क्षेत्रज्ञमात्मानं पर आत्मनीति श्लोकार्थः ।

## छन्दोमात्रगोचराः शब्दाः

१. उभये हि शब्दा लौकिका वैदिकाश्च । लोके विदिता लौकिकाः । वेदे विदिता वैदिकाः । तत्र ये वेदमात्रगोचरास्ते वैदिका इति समाख्यायन्ते । लोकवेदोभयसाधारणाश्च लौकिका

एव । ये वेदमात्रगोचरास्ते लोके न व्यवहार्या भवन्ति । अयं तु तानपि च्छन्दोमात्रप्रसिद्धे-ष्वर्थेष्वपि व्यवहरति । तदिह दिङ्मात्रमुदाहरामः—

प्रमथ्य चैद्यप्रमुखान्हि शुष्मिणः ॥१।१०।२६[२]॥

२. लोके शुष्मशब्दो बलवचनः क्वचिदेव प्रयुज्यते । वेदे शुष्मीति बलवानुच्यते । इह पुराणे तु मत्त इत्यर्थमाचष्टे ।

अजातशत्रुः पृतनां गोपीथाय मधुद्विषः ॥१।१०।३२[१-२]॥

३. अत्र गोपीथशब्दश्छान्दसो रक्षायामर्थे प्रयुक्तः ।

हत्वा स्वरिक्थस्पृध आततायिनः ॥१।१०।१[१]॥

४. वेदे वैदिके च वाङ्मये स्पृदिति युधि स्पर्धितरि रिपौ च वर्तते । इह तु स्पृहावतीत्यस्य स्वातन्त्र्यमपि

अपीच्यदर्शनं श्यामम् ॥१।१२।८[३]॥

५. अपीच्यं सुन्दरम् ।

सेहे महान्महितया कुमतेरघं मे ॥१।१५।१६ ॥

६. महिशब्दो महदर्थे नान्यत्र च्छन्दोभ्य उपलभ्यते ।

सह ओज आर्छत् ॥१।१५।१५[४]॥

सह ओजो बलं भगः ॥१।१६।२८[२]॥

७. उभयत्र सह इति च्छान्दसम् । लोके तु सहसा, साहसम्, साहसिकः, साहसिक्यम् इत्यादय एव सहःप्रकृतयः प्रथन्ते प्रयोगाः ।

विद्धः सपत्न्युदितपत्रिभिरन्ति राज्ञः ॥ २।७।८[१]॥

८. अन्तिशब्दश्छन्दोमात्रगोचरोऽव्ययम् । स्वार्थिककन्प्रत्ययान्तोऽन्तिकशब्दस्तु लौकिकोऽनव्ययः ।

तासां तत्सौभगमदं वीक्ष्य मानं च केशवः ॥ १०।२६।४८[१-२]॥

९. सुभग मन्त्र इति गणसूत्रान्मन्त्र एवाञ् । लोके तु ष्यञि सौभाग्यमिति शब्दः । अयं तु लोकेप्यञमिच्छति ।

अतप्यंस्तमचक्षाणाः करिण्य इव यूथपम् ॥१०।३०।१[३-४]॥

जलाशयमचक्षाणः ॥१।१८।२५[१]॥

मुनयो यदचक्षतात्मन् ॥ २।७।५[४]॥

विकर्षता मध्यगेन पुरुषावप्यचक्ष्महि ॥१०।११।४[३-४]॥

१०. इह चान्यत्र च चक्षिङ् दर्शने प्रयुक्तः । एवम्—

प्रत्यचष्ट कुरुश्रेष्ठ द्विजागमनमेव सः ॥६।४।४१[२-३]॥

११. इत्यत्र प्रतिपूर्वश्चक्षिङ् प्रतीक्षणे प्रयुक्त इति युक्तम् । लोके तु व्यक्तायां वाचि वर्तते ।

नाञ्जः स्वरूपगमने प्रभवन्ति भूम्नः ॥८।७।३४[२]॥

नाञ्जः प्रतिव्योढुं व्रजस्त्रियः ॥१०।३३।१८[३]॥

१२. अत्राञ्जःशब्दोऽव्ययं पठितः । लोके त्वञ्जसेत्येव प्रयोगतो दृष्टः ।

स चर्षणीनामुदगाच्छुचो मृजन् ॥१०।२९।२[३]॥

१३. चर्षणिशब्द आम्नायादन्यत्र नोपलभ्यते । मनुष्यवचनश्चायम् । कविस्तु जीवमात्रेऽर्थे प्रयुङ्क्ते ।

अहो त्रियामान्तरित उद्वाहो मेऽल्पराधसः ॥१०।५३।२३[४-६]॥

१४. राध इति सकारान्तं शब्दरूपं वेदैकगोचरम् ।

अक्षण्वतां फलमिदम्…… ॥१०।२१।७[१]॥

१५. लोके त्वक्षिमतामित्येव । तृतीयादिष्वजादिषु विभक्तिष्वनङ्विधेः । वेद एवान्यत्रापि 'च्छन्दस्यपि दृश्यते' (७।१।७६) इत्यनेन शास्त्रेण । उदाहरति च वृत्तिकारः— 'अक्षण्वता लाङ्गलेन' इति ।

त्वत्पादुके अविरतं परि ये चरन्ति ॥१०।७२।४[१]॥

१६. इत्यत्र परिरुपसर्गो 'ये' इत्यनेन पदेन व्यवधीयते । व्यवहिताश्चोपसर्गाश्छन्दस्येवाभ्यनुज्ञायन्ते ।

## अध्याहारबाहुल्यम्

१. यत्र वक्ता तत्तदर्थोक्तावपेक्षितानि पदानि परित्यजति, यान्यन्तराऽर्थो न स्फुटति, अन्वयो वा न घटते, सा वाक्छान्दी ह्याकाङ्क्षा शब्दैरेव पूर्यत इति वचनादध्याहृतैः पदैः पूरणीया भवति । सोऽयमध्याहारो नाम काव्यबन्धदूषणायालं कवेरनलङ्कर्मीणतां व्यनक्ति । भागवतकारस्य चाध्याहारबहुला वागिति तामल्पामुदाहरामः—

देव्यो ह्रिया परिदधुर्न सुतस्य चित्रम् ॥१।४।५[१]॥

२. अत्र वाससी इति नोक्तमध्याहरणीयं भवति । सुतस्येत्यतोऽनन्तरं पुरो गच्छत इति पदे च पूरणीये भवतः ।

भूरीणि भूरि कर्माणि श्रोतव्यानि विभागशः ॥ १।१।११[१-२]॥

३. अत्र शास्त्राणीति शेषः ।

सत्त्वं विशुद्धं क्षेमाय कल्पन्ते येऽनु तानिह ॥१।२।२५[३-४]॥

४. येताननुभजन्ते इति योजना । ते इति भजन्ते इति च त्यक्तम् ।

न यद्वचश्चित्रपदं हरेर्यशः ॥१।५।१०[१]॥

५. चित्रपदमपीति विवक्षितम् । यथास्थितेऽपिशब्देऽसति विरुद्धमतिकृत्त्वं दोषः ।

कस्य वा बृहतीमेतामात्मारामः समभ्यसत् ॥१।७।९[३·४]॥

६. कस्येत्यतः परं कारणात्कृते इति वाऽध्याहरणीयम् ।

भक्तियोगविधानार्थं कथं पश्येम हि स्त्रियः ॥१।८।२०[३·४]॥

७. अत्र विधानार्थम् इत्यतोऽनन्तरं धरामवतीर्णम् इति शेषो बोध्यः ।

यथा पङ्केन पङ्काम्भः सुरया वा सुराकृतम् ॥१।८।५२[२]॥

८. अत्र दौर्गन्ध्यमिति शेषः ।

रविं विनाक्ष्णोरिव ॥१।११।९[४]॥

९. यथा रविं विनाऽक्षिणी किमपि कर्तुमक्षमे भवतः, एवं वयमपि त्वया विप्रयुक्ता न किमपि कर्तुमपारयामेति विवक्षति । बहुरयमर्थः कवेर्मुखेऽन्तर्लीनः, शब्दास्तूपात्ताः कलयाऽपि नालं तमर्थमभिधातुम् । प्रथमे चरणत्रये तु त्वद्विप्रयुक्तानां नः प्रजानां क्षणोऽप्यब्दकोटिसमोभूदित्येवार्थं उदीरितः ।

बाहवो लोकपालानां सारङ्गाणां पदाम्बुजम् ॥१।११।२६[३·४]॥

१०. अत्राश्रय इत्यध्याहरणीयम् ।

हित्वेदं नृप गङ्गायां यास्यत्यद्धाऽकुतोभयम् ॥१।१२।२८॥

११. अत्रेदंशब्देन शरीरं परामृश्यत इत्यूहनीयम् ।

यावतः कृतवान्प्रश्नान्क्षत्ता कौषारवाग्रतः ।

जातैकभक्तिर्गोविन्दे तेभ्यश्चोपरराम ह ॥ १।१३।२ ॥

१२. अत्र तावतां त्रिचतुरैर्दत्तोत्तरैः सन्तुतोषेत्येतावान्पदसन्दोहः पूरणीयो भवति । तथा सत्येव चकारः समुच्चायकोऽर्थवान्भवति, नान्यथा । यदि चकारोऽनर्थक इत्यभ्युपेयते तदा कृतेभ्यः सर्वेभ्यः प्रश्नेभ्य उपरराम इति प्रश्नक्रियैवानर्थिका स्यात् ।

स्पष्टं विकीर्य पदयोः पतिताश्रुमुख्याः ॥ १।१५।१०[३] ॥

१३. अत्र पदयोरित्यस्याभिसम्बन्धाय केशपरामर्शस्मरणात्तत्कालं प्राप्तस्य श्रीकृष्णस्य नमने इत्येतावद् योजनीयम् ।

यत्तेजसा नृपशिरोऽङ्घ्रिमहन्……॥ १।१५।९[१] ॥

१४. अत्र नृपशिरोऽङ्घ्रिशब्देन जरासन्धं विवक्षति । नृपशिरस्स्वङ्घ्रिर्यस्येत्यर्थकं विशेषणपदं किं शक्तं जरासन्धं प्रत्याययितुम् । नात्रार्थे तस्य शब्दस्य प्रसिद्धिः । न हि सर्वत्र विशेषण-महिम्ना विशेष्यार्थलाभः । तेन जरासन्ध इति विशेष्यमवश्यवक्तव्यम्भवति ।

ते साधुकृतसर्वार्था ज्ञात्वात्यन्तिकमात्मनः ॥ १।१५।४६[१-२] ॥

१५. अत्र मरणमिति शेषः ।

मृषासमाधिराहोस्वित्किन्नु स्यात्क्षत्रबन्धुभिः ॥ १।१८।३१[४] ॥

१६. अत्र क्षत्रबन्धुभिर्गतैरागतैर्वा किन्नु स्यादिति जिज्ञासया मृषासमाधिराहोस्विदित्यर्थो विवक्षितः । महानर्थोऽल्पानि चाक्षराणि ।

याच्ञामृते पथि चरन्प्रभुभिर्न चाल्यः ॥ २।७।१७[४] ॥

१७. प्रभुभिरपीत्यर्थः, ( किमुताप्रभुभिः ) । तेनापिर्नापेक्ष्यः ।

अस्मिन्विधूय कपिलस्य गतिं प्रपेदे ॥ २।७।३[४] ॥

१८. अत्रास्मिन् इत्युत्तरं जन्मनीति पूरणीयम् ।

सर्वान्स्वज्ञातिसम्बन्धान्दिग्भ्यः कंसभयाकुलान् ॥ १०।४५।१५[१-२] ॥

१९. अत्र दिग्भ्य इत्यत उत्तरम् आनाय्येति पूरणीयम् । तावताऽपि न पूर्यतेर्थः । दिशो विद्रुतांस्तांस्तत आनाय्येत्यर्थस्य विवक्षितत्वात् ।

गोप्यः किमाचरदयं कुशलं स्म वेणुः ॥ १०।२१।९[१] ॥

२०. अत्र पद्येऽदभ्रमध्याहरणीयं भवति । प्रथमं तावद् गोपिकानामिति षष्ठ्यर्थप्रतिपत्तये भोग्यमिति पदं पूरणीयम् । अन्यथा या दामोदरस्य सुधा सा गोपिकानां कथमिति पृच्छा समुन्मिषन्ती न शाम्यति । ह्रदिन्यः ( नद्यः ) कथं हृष्यत्त्वच इति विधेयस्योपपन्नतायै विकसितकमलवननिमेषेणेति पूरणीयं भवति । एवं यथार्या इत्युपमानवाक्यार्थावगमाय स्ववंशेजातं भगवत्सेवकं दृष्ट्वेत्यादिरनपेक्ष्यः पदोच्चयोऽभ्युच्चेतव्यो भवति ।

यथाऽध्याहार्यपदसव्यपेक्षा वाक् साकाङ्क्षेति दुष्यति तथाधिकपदापीति पुराणेस्मिन्नधिक-पदत्वं नाम दोषं स्थूलोच्चयेनोदाहरामः—

शिवाय लोकस्य भवाय भूतये ॥ १।४।१२[१] ॥

१. अत्र भवश्च भूतिश्चेत्युभयमेकार्थकम् । प्रत्ययभेदो नार्थभेदः ।

···पृथा बालप्रजा वधूः । युष्मत्कृते बहून्क्लेशान्प्राप्ता तोकवती मुहुः ॥ १।९।१३[३-४] ॥

२. अत्र बालप्रजा पृथेत्युक्त्या तोकवतीति गतार्थम्। यदि न सा केवला क्लेशान् प्राप्ताऽपि तु तस्या अपत्यान्यपीति बोधयितुमिष्यते तर्हि तोकैः समम् इति वक्तव्यम्।

भूतहत्यां तथैवैकां न यज्ञैर्मार्ष्टुमर्हति ॥ १।८।५२^३·४ ॥

३. अत्रैकाम् इति नापेक्षितम्। शब्दोपजनो नार्थोपजनः।

नित्यं निरीक्षमाणानां यद्यपि द्वारकौकसाम्।

न वितृप्यन्ति हि दृशः······॥ १।११।२५ ॥

४. अत्र यच्छब्दो यस्मात्कारणादित्यर्थं उपात्तः, हि शब्दोपि तदर्थकः। तयोरन्यतरः शक्यः परिहातुम्।

नार्थो बलेरयमुरुक्रमपादशौचमापः शिखा धृतवतो विबुधाधिपत्यम् ॥ २।७।१८^१·२ ॥

अत्रायम् इत्यधिकम्। यावच्च विबुधाधिपत्यं विशिंषन्यदिति शब्दो नाध्याह्रियते तावदस्यापार्थता सुस्थिता। अध्याहृते तु तस्मिन् विधेयप्राधान्यादयं शब्दः पुमानर्थवान्भवति।

भवानीं वन्दयाञ्चक्रुर्भवपत्नीं भवान्विताम् ॥ १०।५३।४५^३·४ ॥

६. भवानीं भवपत्नीमित्येतयोः शक्यमेकतरं व्यक्तुम्। अनुप्रासाभिरुचिरेवात्राधिकपदप्रयुक्तेः प्रयोजिका।

## रूढिं प्रत्यनादरः

अस्ति कश्चिद्योगवशोर्थः, अस्ति च रूढिवशः। सम्भवत्यपि योगलभ्येर्थे रूढ्यर्थ एवोपास्यते योगाश्रयश्चापास्यते, 'रूढिर्योगापहारिणी'ति वचनात्। अयं तु प्रौढिमात्रसमाश्रयो रूढिं नाद्रियत इतीदानीं निदिदर्शयिषामः—

सारङ्गाणां पदाम्बुजम् ॥ १।११।२६^४ ॥

१. अत्र सारङ्गाः कृष्णभक्ता इति श्रीधरः। सारं कृष्णं गायन्तीति व्युत्पत्तेः।

यदात्मनोऽङ्गमाक्रीडं भगवानुत्सिसृक्षति ॥ १।१४।८^३·४ ॥

२. आक्रीडशब्द उद्याने रूढः। अयं व्युत्पत्त्यर्थमाश्रित्य विशेषणं प्रयुङ्क्ते।

श्रीविष्णुपद्या मनुंजस्तुलस्याः ॥ २।३।२३^३ ॥

३. श्रीविष्णोः पादयोर्भवायास्तुलस्या इति व्युत्पत्तिमात्रसंश्रितमर्थमाश्रयते, रूढिं तु नाद्रियते। रूढिस्त्वस्य विष्णुपदीशब्दस्य जाह्नव्यां वर्तते।

—क्रमशः



# श्रीमद्भागवतभाषापरिच्छेदविमर्शः*

श्रीरामप्रसादत्रिपाठी, प्राचीनव्याकरणदर्शनागमविभागाध्यक्षो वाराणसेयसंस्कृतविश्वविद्यालये ।

( २२ वर्षे २ अङ्कादनुवृत्तः )

२७. उ०—ऋतवान् सत्ययुक्तस्त्वमिति वक्रोक्त्या विप्रलब्धस्तिरस्कृतोऽपि इति श्रीधरस्वामिनः। तत्र तथा वक्रोक्त्या स भगवान् वञ्चित एव, सत्यवति असत्यवत्ताप्रतीतेः। विसंवाद-पूर्वकोऽयं भगवतस्तिरस्कार एव फलति—इति कोन्वत्र लोकप्रत्ययविरोधः ? कश्च प्रकृतार्थविरोधः ।

२८. उ०—नहि कोषोऽवधारणपर इत्युक्तत्वात्, लिङ्गमशिष्यं लिङ्गस्य लोकाश्रयत्वादिति भाष्योक्तेश्चात्र स्त्रीत्वेऽपि न किञ्चिद् बाधकम्। किञ्चोषशब्दादर्शआद्यचि बह्वादेरा-कृतिगणतया ङीषि काऽनुपपत्तिः ? अन्यत्र क्वापि क्रियामूषी इति न श्रूयते इति कथनं तु बहुशः समाहितम्, उपलब्धौ यत्नः क्रियतामित्यादि। किम् अर्ध-र्चादिगणे पठिता अपि फल-सूत्र-वस्त्र-प्रभृतयः शब्दाः क्वचित् पुंलिङ्गे श्रूयन्ते ?

२९. उ०—वस आच्छादने इति धातौ जाग्रति अभेदेन विकल्पस्य आच्छादयितार इत्यर्थ-स्यार्थात् प्रकरणाद् वालाभे कः क्लेशः ? किंच वसनशब्दः करणाल्युडन्तो वस्त्रवाचक-तया प्रसिद्ध एव, विकल्पस्य वसनम् अभेदज्ञानरूपमस्ति येषु ते इत्यर्थे न नूतनः शब्दो नापि नूतनोऽर्थः। केवलं वसनशब्दस्य विकल्पाच्छादकतयाऽभेदनिश्चये लक्षणाऽङ्गीकर्तव्या ।

३०. उ०—तस्य व्याकरणम्, नामरूपे व्याकरवाणि इति श्रुत्युक्तं शिल्पनैपुणम्। यथाहुः—येन शुक्लीकृता हंसा इत्यादि—इति श्रीधराचार्याः। उक्तश्रुतौ रूपस्य व्याकृतिः शिल्पनैपुणरूपा गृह्यते। लोके तु नाम्न एव व्याकृतौ व्याकरणशब्दः प्रसिद्धः। ततः किम् ?

३१. उ०—गृहाकारं विमानं सादृश्यमूलिकया लक्षणया धृष्ण्यपदेन बोधयितुं शक्यते ।

३२. उ०—विशेषवाचकस्योदर्कशब्दस्य सामान्येऽर्थे उत्तरभावे लक्षणेति न किञ्चिदनुपपन्नम्।

३३. उ०—स्वादिभिः संस्तुतः सर्वेषामस्माकं यत्किञ्चिद् गुणादिकं तत्सर्वमनेन धृतमिति सम्यक्स्तुत इत्यर्थे क्रियमाणे साम्यमर्थतो लभ्यत इति न किञ्चिद् हीयते ।

---

* उत्तरपक्षपरोऽयं लेखः —सं० ।

३४. उ०—नहि लोके वेदप्रसिद्धिर्नियामिका इति व्युत्पत्तिमात्राश्रयेण गत्यपरपर्याये शरणेऽरणशब्दप्रयोगो न कामप्यनुपपत्तिमादधाति। प्रयुज्यते चान्यत्रापि—गत्यर्थको धातुः शरणेऽर्थे। यथा—

आसयत्सलिले पृथिवीं यः स मे श्रीहरिर्गतिः॥ इति।

किञ्च लक्षणैकचक्षुष्कोऽस्मदादिर्लोक इत्यपि न विस्मर्तव्यम्। किञ्च ग्राहेण सह रणनिच्छन्तं तं गजं रणार्थिभिन्नमित्याह इत्यपि बोध्यम्।

३५. उ०—अत्रापि पूर्ववद् व्यवस्था। किंवा, अविद्यमानो रणो यस्य रणार्थिशत्रोरभावात् तादृशं हरिमित्यर्थेऽपि ध्यानं देयम्।

३६. उ०—नित्यसामान्ये वर्तमानोऽपि अजशब्दो नित्यविशेषे काले लक्षणया वर्तते। लाक्षणिकेऽर्थे नहि प्रसिद्धिरपेक्ष्यत इति पूर्वमेव निवेदितम्।

३७. उ०—विविधः कल्पः प्रकारो येषां ते इति समासे कल्पशब्दः प्रसिद्धः प्रकारवचन एव। फले विकल्पा इति फलपदसान्निध्येन विविधप्रकारकफलवन्त इति हि अर्थो जायते। तत्रानावश्यकं प्रकारपदमपहाय विविधफलवन्त इत्येव व्याख्यातं सारग्राहिणा व्याख्यात्रा। नात्र कल्पपदस्य फले प्रयोगः। नापि बहुव्रीहिरलौकिक इति प्रतिज्ञातुं शक्यते हेत्वनुक्तेः। सुरासुरगणा इत्यस्य विशेषणत्वे तत्स्वीकारस्य परमौचित्यात्। किंवा, फले विषये विविधं कल्पयन्तीति विकल्पा इति पचाद्यजन्तकल्पशब्देन भवदुत्प्रेक्षिते तत्पुरुषेऽपि संगमयितुं शक्यते।

योगिनां निकाये विकल्पशब्दो वृत्तिविशेषे प्रसिद्धः। व्याकरणशास्त्रे विभाषारूपेऽर्थे इति प्रसिद्धिः कथं नियामिका भवेत्?

३८. उ०—अराः सन्ति यस्मिँस्तदरि चक्रम्, अत इनिठनाविति इन्नन्तोऽरिशब्दः कथमपह्नोतुं शक्यो लक्षणैकचक्षुष्काणां कृते। अन्यत्रोपलब्धिस्तु यत्नसाध्या। अत एव मन्ये तावत् 'सप्तद्वीपवती वसुमती' इत्यादिभाष्यतो बिभ्यता भवताऽपि दुरापत्वमेवान्यत्रोक्तम्, न तु अभावप्रतियोगी इति, नास्ति वा इति।

३९. उ०—वणिजां पन्थाः पथो वा येषां ते वणिक्पथा वणिक्तुल्याः कृत्रिमा वणिज इत्यर्थः। वास्तविका वणिजस्तु नावि भिन्नायां सहायार्थं स्थापितामन्यां नावं गृहीत्वा व्यवहरिष्यन्तीति न तेषां विक्रोशप्रसङ्गः। कृत्रिमास्तु तद्बुद्धिशून्या इति नूनं विक्रोक्ष्यन्तीति भवति सुष्ठूपमानता तेषामिति न पथिशब्दोऽनर्थक इति शङ्कालेशः।

किंवा, 'वाक्यं वक्तर्यधीनं' हि इत्यपि महाभाष्यं कथं न स्मर्यते ?

४०. उ०—कर्मभिरप्राप्यमित्यत्र तत्रत्यैरिति शेषो बोध्यः। यतो हि न तत्कर्मक्षेत्रमिति तत्र क्रियमाणं कर्म अफलत्वादसत्कल्पमेवेति तत्रत्यैः कर्मभिः पुनस्तद् न प्राप्तं भवतीति अविद्यमानकर्मकार्थकस्याकर्मकपदस्यायं फलितोऽर्थः। अथवा, असाधनं कर्म यस्येति विग्रहेऽत्रत्यमपि कर्म साधनतया न स्वीकार्यम्, किन्तु ज्ञानमेवेति तल्लोकस्य प्रशंसा। अथवा, न कर्म—अकर्म इति नञ्तत्पुरुषः, तद् अकर्म कर्मभिन्नं कायति = साधनतया शब्दायते इति अकर्मकम्। एवं रीत्योक्तार्थे न किञ्चिद् विप्रतिपत्तव्यम्।

४१. उ०—पारोक्ष्यमस्ति यस्मिन्निति विग्रहेऽर्शआद्यचि सर्वमुपपन्नम्। परोक्षे साधुरिति यदन्तोऽयं स्वार्थिकाणन्तश्छन्दः पूरयितुम्। अयमर्थोऽन्यथा न लभ्येत।

४२. उ०—वाहने धोरणशब्दोऽस्त्येव। अस्य प्रयोगो विरलतम इति वदता भवतापि प्रयोगः स्वीक्रियत एव, विरलत्वेन किम् ? एकस्यैव विश्वामित्रशब्दस्य साधनाय 'मित्रे चर्षौ' इति सूत्रयामास भगवान् पाणिनिः। धोऋ गतिचातुर्ये इत्यस्माद्धातोर्निष्पन्नस्य धोरणशब्दस्य प्रयोगे वाहनशब्दापेक्षया यद् रहस्यं न तदविदितं विदाम्।

४३. उ०—अपचितिरपचयः तत्कार्यं लाघवम्, आनृण्येन ऋणभारापनयेन लाघवं भवतीति पदान्तरसन्निधानादप्रसिद्धार्थप्रत्ययः। किंवा लाघवरूपैकफलकत्वेन सादृश्यादानृण्ये लक्षणेति नापराधलेशः पुराणकारस्य टीकाकारस्य वा।

४४. उ०—नितरां भृतः पुष्टो हर्षेण; डुभृञ् धारणपोषणयोरित्यस्मात् क्तप्रत्ययः। द्वावप्यर्थौ आश्रित्य व्याख्यानस्य गभीरत्वं विचक्षणा जानन्त्येव।

४५. उ०—यद्यपि विट्शब्दो धनस्वामिनि वैश्ये शक्तस्तथापि तत्सम्बन्धाद् धनरूपार्थबोधो लक्षणया सुलभ इति बालैरपि सुज्ञानम्

४६. उ०—कारणशब्दः कार्यमाचष्टे लक्षणयेति मा भूत् तत्रार्थे शक्तः प्रसिद्धश्च।

४७. उ०—योगरूढः परमेष्ठिशब्दो योगशक्त्या राज्ञि प्रयुक्तः। परमे स्थाने तिष्ठतीति।

४८. उ०—अत्र नाम्नि हननकर्तृत्वे बाधिते स्वनामबोध्ये सनाम्नि लक्षणा। विनापि प्रत्ययमिति पूर्वपदलोपो वा।

४९. उ०—अत्र शिचः शलाका मौञ्ज्यस्ताभिः निर्मितं पात्रं शिक्यमिति उक्तम्। अद्यत्वे तादृशपात्राभावात् प्रसिद्ध्यभावो न क्षतिकरः।

५०. उ०—'परमाणु' इत्यनुक्त्वा पराणुशब्दप्रयोगे कोऽपराधः, परपरमशब्दयोः पर्यायताया बालैरपि सुज्ञानत्वात्, तदर्थे पराणुशब्दस्य बहुत्र प्रयोगदर्शनाच्च। एवमेवाध्व-

शब्दस्य मार्गवाचितया वाताध्वशब्दस्य वातायनेऽर्थे प्रयोगे कोऽपराधः ? इति सहृदया निभालयन्तु ।

५१. उ०—स्नातकशब्द उक्तार्थे योगरूढः । स्नातशब्दोऽपि तत्रार्थे यौगिको लाक्षणिको वा भवतु नाम का हानिः ? किंवा प्रहेलिकयाऽयं पाठ इति स्वीक्रियताम् । साहित्यशास्त्रे प्रहेलिकायाः प्रसिद्धिरस्त्येव ।

५२. उ०—इदमपि पूर्ववदेव प्रहेलिकया पठितम् । किंवा कटाक्षाणामीं श्रियं पान्तीति कटाक्षेपाः, कटाक्षशोभासंवर्द्धकाः कटाक्षक्षेपा इत्यर्थः प्रकरणादिना । 'नहि यौगिके लाक्षणिके वा शब्दे प्रसिद्धेरपेक्षा' इत्यस्योक्तत्वात् ।

५३. उ०—नास्ति प्रति = प्रतिक्रिया यस्य तदित्यर्थो लक्षणयाऽवगन्तव्यः, यथा तारतम्यशब्दे तरतमप्रत्यययोः प्रकृतिशून्ययोरपि उत्कर्षापकर्षौ लक्षणयाऽवगम्येते, तद्वद् धातुराहित्येऽपि 'प्रति' इत्यस्य तत्र लक्षणायां न किमपि बाधकं पश्यामः । [ किंवा निपातानां स्वातन्त्र्येण वाचकत्वपक्षोऽपि वर्तत एव । प्रकरणेन द्योतकं कृञ्धातुमध्याहृत्य सोऽर्थो बोद्धव्यः । किंवाऽध्याहारवादे द्योतकत्वपक्षेऽपि नास्ति काप्यनुपपत्तिः । ]

५४. उ०—अत्र ह अतलज्जा इति च्छेदः कार्यः । अततेः पचाद्यच् । गतलज्जा इत्यर्थः । किंवा हानं हाः; सम्पदादित्वात् क्विप्, तामतन्तीति हाताः, मूलविभुजादित्वात् के टाप् । तादृश्यो लज्जा येषां ते । किंवा नायं निष्ठाप्रत्ययोऽपि तु जिहीतेरौणादिकः तप्रत्ययः, लोतो गर्त इत्यादिवत् । किंवा ग्वादेराकृतिगणतया ओदितोऽन्य एवायं हा-धातुः ।

५५. उ०—आहिताग्न्यादित्वमभ्युपेयम् । तस्याकृतिगणत्वं न विप्रतिपन्नम् ।

५६. उ०—मह्धातोरौणादिके इप्रत्यये महदर्थको महिशब्दः । पौराणिकाः साङ्ख्यास्तु एवमाचक्षत एव । आधुनिकास्तु विलुप्तसम्प्रदायाः । 'सप्तद्वीपवती' इत्यादि महाभाष्यमपि न विस्मरणीयम् ।

## व्यवहारदूषणम्

१. उ०—जनिकर्तुः प्रकृतिरिति दास्याः प्रकृतेरत्र पञ्चमी । यद्यपि मुख्यप्रकृतिः पिता भवति, तस्य रेतसि जीवसन्निधानात् तदुपादाने तत एव पञ्चमी मातुस्तु सप्तमी । तदनुपादाने तु मातुरेव गौणप्रकृतित्वमित्येवं स्थितौ न पञ्चमीप्रयोगो व्यवहारमतिक्रामति । किंवोक्तसूत्रे हेतुपदं निमित्तकारणपरमपि इति पक्षान्तरे कथं नास्य साधुता ? पञ्चम्यामजाताविति सूत्रे 'संस्कारजः' इत्यादिप्रयोगाः स्मर्तव्याः ।

१. उ०—अत्र दृशि इत्यनेन न नेत्रे इत्यर्थो विवक्षितः, तस्य सविषयकत्वाभावात्। अपि तु 'इक्श्तिपौ धातुनिर्देशे' इतीक्। स च धात्वर्थनिर्देशेऽपि लक्षणया। यजतिषु ये यजामहं करोतीति तादृशाः प्रयोगाः प्रसिद्धा एव।

२. उ०—किंवा दर्शनं दृक् सम्पदादित्वात् क्विप्, तस्यां गोचरो विषय इति कथनं न व्यवहारातिगम्। अत्र ज्ञाने विषयो घट इत्यादिव्यवहारवत्।

३. उ०—ववृषुः = वृष्टिं चक्रुः, वृष्टिर्धारासम्पातस्तत्साधनानि कुसुमानि। नहि कारकं वस्तुव्यवस्थितमपि तु वैवक्षिकम्।

४. उ०—अवतरणक्रियाया अधिकरणत्वविवक्षयेयं सप्तमी, कर्मत्वविवक्षायां भवतु नाम द्वितीया। अधुनैव कारकाणां वैवक्षिकत्वोक्तेः। ग्रामं गच्छतीतिवद् ग्रामे गच्छतीति भवत्येव।

५. उ०—अद्यतनशब्दस्य कालपरत्वं नातिरोहितं शाब्दिकानामिति अद्यतनात् कालात् परतः पञ्चमेऽहनि इति योजनया न कोऽपि व्यवहारविरोधः। अद्य परतः पञ्चमेऽहनि इति कथने तु कथमिष्टार्थो लभ्येत ? इति जानन्तु सचेतसः।

६. उ०—द्वारकायां जिष्णौ सम्प्रस्थिते सति इति सत्सप्तम्यां न दोषः। आम्, द्वयोरन्यत्वं भासते किन्तु तद् न प्रमापकमपि तु भ्रमात्मकमेव, जिष्णुपदार्थोऽर्जुन एवेति ज्ञाने सति तदपगमो भविष्यति। किञ्चात्रोद्देश्यप्रतिनिर्देश्यभावो नास्ति, वाक्यैकवाक्यत्वाभावात्।

७. उ०—भगवत्तेजःसम्बन्धकाले स्थितस्य कलेवरस्याधुनिककलेवरापेक्षया विप्रकृष्टतयादःपदप्रयोगः परमौचितीमावहत्येव।

८. उ०—कस्मिन् कोशे कूटशब्दोऽप्राणिराशिवचन इति वर्तते। समूहे शक्तस्तद्विशेषे तु लाक्षणिक इति को विरोधः। किञ्च, स्त्रीरत्नानां कूटे संघे तिष्ठतीति विग्रहे कुतस्तद् विशेषवाचित्वमपि इति निभाल्यताम्।

९. उ०—आयुरर्थे प्रयुक्तस्यापि निर्विशेषं न सामान्यमिति न्यायेन पर्यवसानं तु तद्विशेषे एव भविष्यति। किञ्च विशेषपरत्वेऽपि का बाधा ?

१०. उ०—बहुषु भगवत्पदार्थेषु लोके व्यवहृतेषु मुकुन्दादन्यतमः को भगवत्पदार्थ इत्यवधाने न डतमचोऽनुपपत्तिः। किञ्च, अन्यतमशब्दोऽव्युत्पन्न एव स्वभावाड्डतमार्थे वर्तते इत्यपि न विस्मरणीयम्।

११. उ०—द्विजदेवगाः तिरस्कर्तुमिति क्रियार्थोपपदस्येति चतुर्थ्यां न कोऽपि व्यवहारातिपातः।

१२. उ०—अलंशब्दोऽत्र पर्याप्तौ। यच्च श्रवणाय पर्याप्तं तत् तत्र योग्यमेवेति कथं व्यहारदोषः?

१२–क. उ०–उद्यन् यन्निति पदयोः समभिव्याहारेणात्रादःशब्दो विप्रकृष्टविशेषे सूर्ये लाक्षणिको बोध्य इति नानुगतव्यवहारोलङ्घनम्।

१३. उ०—नाहं वेद न च यूयं वेत्थ, नापि चान्ये विदुरिति अन्यपदाध्याहारेणान्वये नास्ति कश्चन शङ्कालेशः। युक्तं चैतत्, नहि केवलमस्मद्युष्मच्छब्दार्थयोरेव तद्वेदने निषेधोऽपि तु अन्येषामपि इति अभीष्टमर्थं ज्ञापयितुं विदुरित्युक्तिर्न व्यवहारमतिशेते।

१४. उ०—ब्रह्मबन्धुर्निन्दितो ब्राह्मणः। सर्वस्वापहारित्वं दृष्ट्वा स्वस्वामिनं बलिं प्रति असुराणामियमुक्तिः कथं न निन्दां बोधयतीति विजानन्तु विज्ञाः।

१५. उ०—नैसर्गेण अमर्षेण दुर्वैरा इति योग्यतया व्याख्येयम्। अथवा नैसर्गतो निसर्गतो दुष्टं वैरं येषामिति व्यधिकरणबहुव्रीहिरभ्युपेयः।

१६. उ०—स्पर्शयतिः क्व वितरणे दृष्टः। नात्र भागवतकारः स्पृशिं दाने शक्त्या प्रयुङ्क्ते, अपि तु द्रव्यस्पर्शपूर्वके दाने लक्षणया। अयं व्यवहारो लोकानुग एव। दीयमानद्रव्यस्य दात्रा प्रतिग्रहीत्रा चोभाभ्यामपि स्पर्शपूर्वकमेव दानस्य प्रतिग्रहस्य च दर्शनात्।

१७. उ०—हरिमित्यस्य देहलीदीपकन्यायेन पूर्वपरयोरुभयोः सम्बन्धः। पुष्पैर्हरिं किरन्त आच्छादयन्त इत्याद्यर्थः। किरतिरत्र विक्षेपपूर्वके आच्छादने लाक्षणिकः। किंवा अवेत्युपसर्गात्मकपूर्वपदस्य लोपो बोध्यः, विनाऽपि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वाच्य इति शाब्दिकसिद्धान्तात्। किंवा, तद्विनाऽपि पुष्पैरिति करणपदेनैव कृ इत्यस्य तदर्थाभिव्यञ्जनम्।

१८. उ०—हन् धातुरत्र ताडने = आहनने लाक्षणिक इत्येवं सर्वं पूर्ववत्।

१९. उ०—अनद्यतनत्वेन भूतत्वेन च ज्ञाते काले या परोक्षा क्रिया तद्वृत्तिधातोर्लिडित्यर्थकेन परोक्षे लिडित्यनेनात्र लिट्करणे न कापि बाधा, अद्यतनेऽपि काले अनद्यतनभूतत्वयोरारोपात्। आरोपे हेतुश्च युद्धेऽतीवशैघ्र्येण तेषां जयः, अस्माकं च पराजयः। यदस्माभिः प्रत्यक्षीकर्तुं सा क्रिया न शक्या। अतश्च प्रत्यक्षेऽपि परोक्षता, अद्यतनेऽपि अनद्यतनता, वर्तमानेऽप्यतीतता। मन्यामहे यदस्माकमक्षिषु धूलिं निक्षिप्य ते विजितवन्तः। समादृता चैषा विद्या न्यायविदग्रेसरैः श्रीमद्भिरुदयनाचार्यैः 'व्यातेने किरणावलीमुदयनः' इति वदद्भिः।

अथवा, एवमुपर्युक्तरीत्या रिपवो जिग्युः आत्मानुसारिणि काले सति। अधुनाऽपि सा स्थितिरस्त्येवेत्येवं क्रमेण वाक्यार्थः कार्यः। आत्मानुसारिणि काले पुरा रिपवो जिग्युरधुनापि जयकाशिन एवेति योजना।

२०. उ०—उपमानोपमेययोरेकविभक्तिकत्वं विशेषणविशेष्ययोरिव प्रायिकम्। चन्द्र इव मुखानि दृश्यन्ते, राजँस्तव यशो भाति कुन्देन्दुकुमुदानि व, इत्यादिप्रयोगाणां प्रामाणिकत्वेऽसंदेहात्। किंवा, 'या कुन्देन्दुतुषारहारधवला' इत्यत्रोपमानबहुत्वं यदि न व्यवहारमत्यक्रामत्, तर्हि अत्रापि कथमतिक्रमिष्यति।

२०. उ०—किंवा भ्रातर इति प्रियतमस्यान्यस्याप्युपलक्षणमिति द्योतयितुं तदंशे स निर्देशः।

२१. उ०—कृदन्ते क्रियापदे विशेष्ये विशेषणस्य द्वयी विधा धात्वर्थे विशेषणता, कृदन्तार्थे वा। आद्ये क्रियाविशेषणानां कर्मत्वं क्लीवत्वम्, द्वितीये विशेष्यानुसारिलिङ्गवचनता। तत्राद्यमेव भवदुत्प्रेक्षितम्, द्वितीये तु स्तोकः पाकः, शोभना कृतिः, फलसम्पत्तिः शोभना जाता, इत्यादिवत् कथं न साधुता? अभेदेन विशेषणत्वे कथं विधेयद्वय-प्रसक्तिः? यदि च व्रीडिताया महत्त्वं नात्र विवक्षितमपि तु व्रीडाया इति उच्यते, तदा सत्यमित्युक्त्वा शिखी ध्वस्त इति स्मारयामः।

प्रचरन्ती लौकिकी ( हिन्दी ) वागेत्र संस्कृतानुगा प्राय इति तत्र न विद्वेषः कार्यः। मन्ये तावदीदृशं मातृगतं रहस्यं तिरोदधाना एव सा इदानीं राष्ट्रभाषा-पदमलङ्करोति।

२२. उ०—"व्रजामि शरणं तेऽद्य यदि नेच्छामि संयुगम्" इति सम्पूर्णे उत्तरार्द्धे दृष्टे को नाम कथं सन्दिग्धे, अद्य यदि ते संयुगं नेच्छामि तर्हि त्वां शरणं व्रजामि इत्यन्वयात्। यदि घटितस्य वाक्यस्य प्रागन्वये एव तर्हि पदघटितस्यान्वयः कर्तुमुचित इत्यस्य सार्वजनीनत्वात्। षष्ठीप्रयोगोऽपि नैव हिन्दीमनुकरोति, अपि तु गृहेऽर्थे स्वरूपं प्रकाशयति। किंवा रक्षितर्यप्यर्थे राहोः शिर इतिवद् अभेदार्थिका षष्ठी बोध्या। एकशतं षष्ठ्यर्था इति वदद्भिः हलन्त्यमित्यत्र एकशेषं च दर्शयद्भिर्भाष्यकृद्भिरयं प्रकारः समादृत एव। पुरुषस्य चैतन्यम्, शिला पुत्रकस्य शरीरमित्यादिष्वपि एषा गतिरनुभूयते।

## क्लिष्टान्वयः ( पदवाक्यदुःश्लेषः )

१. उ०—रसस्य मा = सम्पत् तस्या आलयम्। किंवा रसो मीयतेऽनया सा रसमा सरस्वती, तस्या अपि लयः पारागमनं यत्र तत्, अत एवोच्यते—'लिखति यदि गृहीत्वा शारदा

सर्वकालं तदपि तव गुणानामीश पारं न याति' इत्यादि। किंवा रसं मिमते इति रसमा भक्तास्तेषां लयः अत्यन्तश्लेषो यत्र तत्, भक्त्या भागवतं शास्त्रमित्युक्त्या भक्तानामेवाधिकारात्। किंवा रस्यते यत् तद् रसं रस्यमानमित्यर्थः, कर्मणि घञ्, क्लीबता च। क्वचिद् घञन्ता अपि नपुंसके भवन्ति "सम्बन्धमनुवर्तिष्यते" इति भाष्यप्रयोगात्। समादृतश्चायं पन्था हरिदासभट्टाचार्येण न्यायकुसुमाञ्जलिटीकां विदधता—सत्पक्षप्रसर इति द्वितीये श्लोके प्रथमस्तबके।

एवंप्रकारेषु यः प्रकारो यस्मै रोचेत, तेन सः समाद्रियताम्, कथङ्कारं क्लेशोऽन्वये? भुक्तैरपि तत्पानस्येष्टत्वादित्युक्त्या श्रीधराचार्या जीवन्मुक्तान् विवक्षति, न तु सामान्यतो मुक्तान्, अन्वयबाधात्।

फलस्य रसत्वारोपेऽपि न रसगताः सर्वे भावाः फलेऽतिदेष्टुं शक्यन्ते, नहि तीरे गङ्गात्वाऽरोपेऽपि तत्र स्नानादिक्रिया कर्तुं शक्यते। न वा देवदत्तेऽग्नित्वारोपेऽपि तन्मस्तके पाकः कर्तुं शक्यते इति रजोऽवकीर्णताया अत्रावसरो नास्ति, येन प्ररोचना प्रवञ्चना वा भवेत्।

२. उ०—सत्यं तदेत्यपेक्षितम्, अर्थलभ्यतया तस्याप्रयोगेऽपि न क्षतिः। स्वे महिम्नि सम्पन्न एव महीयते इति विदुरिति योजना। महीयते महान् भवति लोके प्रशंसितो भवति। उपाधिपरिच्छेदाभावात्। स्वे महिम्नि सम्पन्न इत्युद्देश्यम्, महीयते इति महत्त्वं विधेयम्। अन्यथा स्वे महिम्नि सम्पन्न एवेत्यत्र किमुद्दिश्य किं विधीयेत? महीयते इत्यस्य सत्त्वे तु स्वे महिम्नि सम्पत्तिरुद्देश्यतावच्छेदिका, तदाश्रयमुद्दिश्य महत्त्वं विधीयते। तादृश्याः सम्पत्तेरूर्ध्वं मा भून्नाम महत्त्वाधिगमः तस्य कश्चन विलक्षणः, किन्तु लौकिकीं महत्तामनाकाङ्क्षितामपि वारयितुं कः क्षमते? सा तु आगच्छत्येवेति तस्या एव विधेयत्वं पूरयितुमवश्यमिदं पदं देयम्।

३. उ०—यच्छब्दस्य नित्यं तच्छब्दाकाङ्क्षत्वेन तच्छब्दाध्याहारान्न दोषः। अध्याहारादिनाऽन्वययोजना स्फुटं प्रसिद्धैव।

४. उ०—"दृष्ट्वाऽनुयान्तमृषिमात्मजमप्यनग्नं देव्यो ह्रिया परिदधुर्न सुतस्य चित्रम्" इति पूर्णे पूर्वार्द्धे दृष्टे तु न किञ्चिदपि दुरन्वयम्। यतश्च आत्मजमनुयान्तमनग्नमपि ऋषिं दृष्ट्वा देव्यो ह्रिया अनग्नं परिदधुः। अत्र न भवति नग्ना येन तत् अनग्नं वस्त्रमित्यर्थः। सुतस्य अनग्नं स्वरूपं दृष्ट्वापि न परिदधुः। अत्र नास्ति नग्नं पञ्च-

कोशाद्यनावृतं स्वरूपं यस्मात् तद् यदपेक्षया मायातत्कृतप्रपञ्चाद्यावरणेनानावृतं स्वरूपं लोके नास्ति इति भावः। एवं च अनग्न ऋषिः अनग्नं वस्त्रमनग्नं श्रीशुकस्वरूपमिति त्रितयस्थानग्नशब्दस्यैकशेषो नपुंसकमनपुंसकेनेति। श्लेषालङ्कारो वा।

५. उ०—अत्र यस्मादित्यर्थे यदित्यव्ययम्। हेतौ पञ्चमी। यस्माद्धेतोः भगवान् शुकः पुण्यां भागवतीं कथामाह, तं हेतुं वदेत्यन्वयकरणे न कस्यापि कुत्रापि विघटना। इदमेव हि अत्र विवक्षितमस्ति, अन्यथा भागवत्याः कथायाः प्रश्ने सूतेन शौनकाय सापि वक्तव्या स्यात्। यच्च सर्वथाऽत्र न संगतम् इति जानन्त्येव श्रीमद्भागवतरसिकाः।

६. उ०—अत्र यत्पदेनाप्रधानीभूतस्यापि यशसः परामर्शः, क्रय्यस्तदर्थे इत्येव। किंवा पूर्वा रीतिरपि अनुसर्तुं शक्या।

७. उ०—अच्युतभाववर्जितं नैष्कर्म्यमपि न शोभते, निरञ्जनं ज्ञानमपि अलं न शोभते। अभद्रमपि कर्म ईश्वरे शश्वन्न चार्पितं यद् ईश्वरेऽर्पितं कर्म फलस्याकारणं तत्पुनः तत्तु कुतः शोभते? इति योजनायां न कश्चिद् दोषः। च-शब्दो ह्यर्थे उक्तः। अभेदेनान्वये न वाक्यभेदावसर इत्यस्य पूर्वमुक्तत्वात्।

८. उ०—यैरकृतात्मभिः राजन्यैर्ब्रह्मकुलं कोपितम्। तेषां राजन्यान्यकुलं तत् कुलं शुचार्पितं सत् सानुबन्धमाशु प्रदहति प्रदग्धं भवति इति योजना। कर्मणोऽविवक्षया दहतिरत्राकर्मकः। स्वभावतः प्रशान्तस्य दुष्टराजन्यप्रयुक्तकृत्रिमकोपाक्रान्तस्य ब्रह्मकुलस्य तत्कुलप्रदहने न कर्तृता युक्ता, अपि तु तेषां राजन्यानामपराध एव तत्कुलदाहे कर्ता इति विवेकः।

९. उ०—अश्रूणि मुखे यस्याः साश्रुमुखी; पतिता चासौ सा चेति कर्मधारयः। अत्र पतनक्रियायाः सापेक्षत्वेऽपि नासामर्थ्यप्रयुक्तसमासाभावः। कारकांशे नित्यसापेक्षत्वात्। यद्वा पदयोर्भगवत्पदयोः पतितानि पतितुमारब्धानि पतनशीलानि अश्रूणि मुखे यस्याः सा, यद्वा स्वपदयोरेव पतनोन्मुखानि अश्रूणि मुखे यस्याः सा।

१०. उ०—अत्र क्लिष्टान्वयत्वे दोषः प्रागेव परिहृतः। वाक्यभेदश्च यत्तच्छब्दघटितवाक्ययोरेकवाक्यत्वात् परिहृतो भवति। यत इति यच्छब्देन श्वाकान्नशिष्टोपभोजनस्याऽप्रधानस्य परामर्शस्तु क्रय्यस्तदर्थे इतिवत्।

११. उ०—अत्र विमर्शिताविति द्विवचनान्तपाठ इति नाऽनन्वयस्य लेशोऽपि। दृश्यते चायं पाठो मूलपुस्तके गीताप्रेसप्रकाशिते। यद्योकारघटितः क्वचन पाठस्तर्हि यन्त्रदोष एव तत्र न कवेर्दोषः।

१२. उ०—शेषे इत्यावृत्तेन विधिसूत्रेण दारैर्निष्पाद्यं कर्मेत्यर्थे दारशब्दादण् प्रत्ययः। काव्यस्य वृषपर्वणश्च कन्याभ्यां कृतं दारं दारनिष्पाद्यं कर्म यस्येति विग्रहे श्रीधराचार्यतात्पर्यम्। किंवा दारपदस्य दारकर्मणि लक्षणा। अथवा ताभ्यां कन्याभ्यां कृतं सुकृतं दारयतीति कर्मण्यण्। ताभ्यां सुकृतं कथमस्य विदीर्णमिति न तिरोहितमितिहासविदाम्।

१३. उ०—अत्र कुतोऽन्या इत्यस्यांशस्य "अस्य प्रसादस्य पात्राणि" इति शेषो बोध्य इति नान्वयदौर्लभ्यम्। कुतोऽन्यासामिति कथनेऽपि अयं प्रसादो लभ्येतेति वाक्यभेदोऽवश्यम्भावी। नह्येषा गद्यात्मिका वागपि तु पद्यात्मिकेत्यपि ध्यातव्यम्।

१४. उ—अत्र तमित्यनेन क्षेत्रज्ञमित्यस्य परामर्शः। तृतीयचरणे तु आत्मानमिति क्षेत्रज्ञपदस्यैव व्याख्याभूतमिति नोक्त दोषः। "क्षेत्रज्ञं चापि मां विद्धि" इति भगवद्गीतादिषु क्षेत्रज्ञपदेन परमात्माऽपि गृहीतोऽस्ति, सोऽत्र न गृह्येताऽपि तु जीवात्मैवेति। तन्निरासाय व्याख्याया आवश्यकता। किंवा त्यदादीनां बुद्धिस्थपरामर्शित्वसिद्धान्तेऽपि नान्वयक्लेशः।

## छन्दोमात्रगोचराः शब्दाः

१. उ०—अत्रेदं बोध्यम्—ये शब्दाश्छन्दसि इत्यादिपदान्युपादाय पाणिनिसूत्रैर्व्युत्पादितास्ते वैदिकास्तदन्ये लौकिकाः। लोकवेदोभयसाधारणाश्चेति। कथं ज्ञातुं शक्यं यदयं शब्दो वेदमात्रगोचरः, अद्यत्वे साहित्यस्य लौकिकवैदिकोभयरूपस्यापि परिभ्रष्टत्वात्। किञ्च वेदमात्रगोचरा अपि अनुकरणेन इति शब्दमन्तरापि लोके लक्षणया तस्मिन्नेवार्थे प्रयोक्तुं शक्यन्ते, यथा तारतम्यशब्द उत्कर्षापकर्षरूपेऽर्थे लक्षणया प्रयुज्यते।

२. उ०—अत्र शुष्मशब्दस्य प्रकृतिभूतस्य शुष्मप्रयुक्ते पदे लक्षणा।

३. उ०—प्रागुक्तरीत्याऽयमपि उभयसाधारणः।

४. उ०—भवतु नाम स्वातन्त्र्यमपि। किन्तु स्वरिक्थस्य ये शत्रवस्तानिति रिपुरूपेऽर्थे वृत्तौ का हानिः?

५. उ०—अयमपि मदुक्तलक्षणेनोभयसाधारण एव ।

६. उ०—मदुक्तरीत्याऽयमपि उभयसाधारणो महिशब्द उत्सववति शक्तो महदर्थे लक्षणया प्रयोगः ।

७. उ०—सह इत्यस्य छान्दसत्वे मानाभावः, सहसा इति तृतीयान्तस्य प्रचुरः प्रयोगो लोके उपलभ्यमानः किं महःशब्दस्य न प्रयोगः ? अपि तु सह ओज आर्छदित्यत्र न प्रकृतिभूत एव सहःशब्दोऽपि तु द्वितीयान्त एव ।

८. उ०—अत्र प्रत्ययान्तस्य लौकिकत्वे तद्घटकस्य लौकिकत्वं नेत्यत्र मानाभावः । किञ्चोक्त-लक्षणदिशा उभयत्र साधारणत्वमेवास्यापि । किञ्च, चादेराकृतिगणतयाऽस्य तत्र पाठाभावेऽपि न दोषः । किञ्च, इन्नन्तस्यान्तिशब्दस्य विद्ध इति क्रियाविशेषण-त्वेऽपि नास्ति क्षतिः ।

९. उ०—सुभगमन्त्रे इति तु प्रायिकम्, अकर्तरि च कारके संज्ञायामिति यथा । सुभग-रूपार्थः सौभगो मद इति विग्रहेऽपि न दोषः । किञ्च, शोभनो भगः सुभगः, स एव सौभग इति स्वार्थेऽणापि न क्षतिः ।

१०. उ०—धातूनामनेकार्थत्वाद् बहुलमेतन्निदर्शनमित्युपदेशाच्च न कामपि क्षतिमावहत्ययं प्रयोगः । किंच, चष्टे पश्यति यत् तच्चक्षुरिति लोकप्रसिद्धश्चक्षुश्शब्दोऽप्यत्रार्थे एवानुकूलः ।

११. उ०—अत्रापि पूर्वोक्तं समाधानमस्त्येव । किञ्चोपसर्गबलेनापि धातोरर्थान्तरे वृत्तिर्बोध्या ।

१२. उ०—अञ्जःशब्दो यदि अव्ययमपि तदा को दोषो विरोधो वा ? किंवा, अञ्ज इति क्रियाविशेषणमपि भविष्यति ।

१३. उ०—पाणिनीयव्याकरणे वैदिकत्वानुक्तेरुपलब्धौ यत्नः कार्यः । किञ्च, जातिमात्रपरत्वेऽपि को विरोधः ?

१४. उ०—कथं वेदैकगोचरत्वं पाणिनीयव्याकरणाद् अवधार्यते ?

१५. उ०— छन्दस्यपि दृश्यते इत्यत्रापि शब्दाल्लोकेऽपि । किञ्च, अक्षिशब्दवदक्षन्शब्दोऽप्यस्ति । 'अस्थिदधि' इति सूत्रं तु अजादिविभक्तौ प्रयोगनियमार्थम् । अक्षन्शब्दान्मतुपि पृषोदरादित्वात् साधुता । 'उदन्वान्' 'राजन्वती' इतिवत् ।

१६. उ०—छन्दोऽनुरोधेन तथा पाठेऽपि अस्माभिरव्यवधाने नैव पठितव्यः। तथा च कालिदासः—"प्रभ्रंशयां यो नहुषं चकार" इति। किंवा लक्षणाद्यर्थे परि इत्यस्य कर्मप्रवचनीयत्वेऽपि सर्वेष्टसिद्धिः।

## अध्याहारबाहुल्यम्

१. उ०—श्रीमद्भागवतं न काव्यम्, किन्तु पुराणम्। भगवच्चरितस्य निगूढरूपेण बोधनाय भक्त्यैव प्रवर्तितमिति अध्याहारो दुरवबोधत्वं वा न दोषः। दुरवबोधक्रिया भगवत्यश्रद्धानां सम्प्रदायतोऽनध्येतृणां बोधाभावाय।

२. उ०—अत्राध्याहारं विनैवान्वयपूरणं पुराकृतं स्मरणीयम्।

३. उ०—अत्र श्रवणयोग्यतया शास्त्राणि इत्यध्याहारे न कोऽपि क्लेशः।

४. उ०—यत्तदोर्नित्यसम्बन्ध इति यच्छब्दबलात् 'ते' इत्यस्याक्षेपः। भजन्ते इति च अर्थप्रकरणाभ्यां लभ्यमिति न कोऽपि विरोधः।

५. उ०—योग्यताबलादपि पदमध्याहार्यम्। चित्रपदस्यापि वचसः शिवादिस्तुतिपदस्थहरिस्तुतिपरत्वाभावसम्भवात्।

६. उ०—योग्यतयाऽध्याहारो भूषणमेव न दूषणम्। अध्याहारस्य दोषत्वाभावः सप्तमे साहित्यदर्पणे द्रष्टव्यः।

७. उ०—तादृशे शेषे कोऽपि न दोष उद्भावयितुं शक्यते। साम्प्रदायिकानां बोधस्तु सुगम एव।

८. उ०—सामान्येन निर्दिष्टस्य सुराकृतादेर्विशेषतो भानम्, अर्थवशात्।

९. उ०—यदि नालं तदा कथं भवतो बोधः? यदि टीकातः, तदा टीकाकारस्य कथं बोध इत्यादि विचारणीयम्।

१०. उ०—यदि एतावति महति क्षेत्रे योग्यताबलात् किमपि अल्पमध्याह्रियते तत्र न किमपि दूषणमालोचयामः।

११. उ०—इदंशब्दस्य सर्वनामतया पुरोवर्तिशरीरवाचकत्वं सम्भवत्येव, का क्षतिः?

१२. उ०—अत्र चकार एवकारार्थकः। तेभ्य एवोपररामेत्यर्थे कोऽपि न दोषः प्रतीयते।

१३. उ०—प्रकरणाच्छ्रीकृष्णस्य लाभः। पदयोः पतनेनैव नमनं प्रतीयते।

१४. उ०—प्रकरणमहिम्ना नृपशिरस्त्वेन जरासन्धस्य ग्रहणम्।

१५. उ०—अतिशयितेऽन्तिके भवमात्यन्तिकम्। अध्यात्मादित्वाट्ठञ् अतिसमीपकालभव-
मात्मनो मरणं ज्ञात्वेति अर्थप्रकरणाभ्यामवसीयते।

१६. उ०—अत्राप्यध्याहारोऽर्थत्रोधायार्थप्रकरणाभ्यां भवत्येव। क्लिष्टत्वं तु मत्या कृतम्। अत एव 'विद्यावतां भागवते परीक्षा' इति प्रवदन्ति शिष्टाः।

१७. उ०—'अपि:' अत्राप्युक्तरीत्या सौकर्येण लभ्यः।

१८. उ०—अत्रापि योग्यतया "जन्मनि" इत्यस्य लाभे न कोऽपि दोषः। न वा कोऽपि क्लेशः।

१९. उ०—अन्वयबाधे योग्यतया आनाय्येति अध्याहर्तव्यं भवति।

२०. उ०—अत्रापि अध्याहारे क्लेशः पूर्ववत् परिहार्यो भवति।

## अधिकपदत्वम्

१. उ०—भवाय=जन्मने; भूतये=ऐश्वर्याय इत्यर्थभेदः सुस्पष्ट एव।

२. उ०—अत्र बालप्रजा इत्यनेन प्रजानां बालत्वं ज्ञापितम्। तोकवती क्लेशान् प्राप्ता इत्यनेन तोकविशिष्टायाः क्लेशप्राप्तिः सूचितेति न गतार्थता।

३. उ०—एकां पापेषु प्रधानभूताम्। अस्ति ह्येकशब्दः प्रधानेऽर्थे।

४. उ०—अत्र हिशब्दः प्रसिद्धौ इति न शक्यः परिहातुम्।

५. उ०—अध्याहारेण अयं शब्दस्य सार्थकत्वे न कोऽपि बाधः।

६. उ०—स्त्रीपत्नीशब्दयोर्भिन्नार्थकत्वं सकललोकतन्त्रप्रसिद्धमेवेति कथं पौनरुक्त्यम्।

## रूढि प्रत्यनादरः

१. उ०—भागवतस्य निगूढभाषामत्यैवैतत् सर्वम्, अत एव श्रीवल्लभाचार्यैर्भागवते रहस्यभाषा इत्युक्तम्।

२. उ०—यत्र न रूढ्यर्थबाधस्तत्रैव रूढिर्योगापहारिणी इति सिद्धान्तः। तद्बाधे तु योग एवोपादेयः।

३. उ०—अत्रापि पूर्ववत् समाधानम्।

—क्रमशः

# अविद्याध्यासनिरूपणम्

श्री-आनन्दझाः, लखनऊविश्वविद्यालये संस्कृतप्राध्यापकः।

( २२ वर्षे २ अङ्कतोऽनुवृत्तम् )

यदीतः परमपि कश्चिदेवं ब्रूयाद् यदेवमप्यभावात्मकस्यापारमार्थिकस्योपादानभूतेऽज्ञानेऽव्याप्तिर्दुर्वारा, उपादानोपादेययोः साजात्यनियमेनाभावात्मकस्योपादेयस्योपादानेऽज्ञाने भावत्वस्य वक्तुमशक्यत्वात्। नह्यभावस्याज्ञानानुपादानकत्वमपि शक्यते वक्तुम्, तथा सति ब्रह्मवत् तस्यापि पारमार्थिकत्वापत्त्या द्वैतापत्तेर्दुर्वारताप्रसङ्गात्। एवञ्च, कथमुक्तमविद्यानिरूपणं सङ्गच्छत इति, तर्हि तदुत्तरतया खल्वेवं वक्तव्यं यन्निरुक्ताविद्यानिरूपणघटकं ननु भावत्वमभावविलक्षणत्वरूपमेव विवक्षितं नान्यत् किञ्चित्। उपादानोपादेययोरत्यन्तावैलक्षण्याभ्युपगमे ननूपादानोपादेयभावस्यैवासम्भवित्वापत्त्याऽभावोपादानेऽज्ञानेऽभाववैलक्षण्याभ्युपगमेनाभाववैलक्षण्यरूपस्य भावत्वस्य प्रोक्ताविद्यानिरूपणघटकस्याभावोपादानभूतेऽज्ञाने सम्पत्तेरुक्ताव्याप्त्यनवकाशात्। तथा च नाभावोपादानाज्ञानेऽव्याप्तिरिति।

न चैवं सति ब्रह्मभिन्नयोर्भावाभावयोरुभयोरपि पारमार्थिकत्वापत्तिभियाऽज्ञानोपादानकत्वस्यावश्यमभ्युपेयतया, उपादानभूतेऽज्ञानेऽभावात्मकोपादेयवैलक्षण्यमिव भावात्मकोपादेयवैलक्षण्यमपि स्वीकर्तव्यं स्यादवश्यमिति कृत्वा पुनरपि तत्राव्याप्तिः, भाववैलक्षण्याभाववैलक्षण्ययोर्हि भावत्वाभावत्वयोः परस्परं विरुद्धतयैकत्राज्ञाने स्थित्यभावेनाभाववैलक्षण्यरूपस्य भावत्वस्याज्ञानेऽसत्त्वात्। असम्भवापत्तिरेव वा युक्त्यैतयेति वाच्यम्, भावत्वाभावत्वयोर्गोत्वाश्वत्वयोरिव परस्परविरहव्याप्यतया विरोधेन गोत्वाश्वत्वविरहयोरिव भावत्वाभावत्वविरहरूपयोर्भावाभाववैलक्षण्ययोरेकत्रावस्थाने बाधकाभावात्। तिष्ठत एव गोत्वाश्वत्वविरहौ, गवाश्ववैलक्षण्ये वा, गवाश्वभिन्ने गजे। तथा चोपादानोपादेययोर्वैलक्षण्यानुभवबलेनैकस्मिन्नुपादानभूतेऽज्ञान उपादेयभूतभावाभाववैलक्षण्यस्य सत्त्वे बाधकाभावेन, तत्राभाववैलक्षण्यरूपस्य भावत्वस्योपपत्त्या नोक्ताव्याप्तेरसम्भवस्य वावकाश इति भावः। अथवास्तु ज्ञानत्वेन ज्ञाननिवर्त्यत्वमात्रमविद्यालक्षणम्, कृतमनादित्वभावत्वविशेषणाभ्याम्। न च तर्हि प्रोक्तयोरतिव्याप्त्योर्दुर्वारतापत्तिरिति वाच्यम्, ज्ञानत्वेन ज्ञाननिवर्त्यत्वस्याज्ञानलक्षणस्य ज्ञानत्वावच्छिन्ननिवर्तकतानिरूपितनिवर्त्यतापर्यवसन्नतया तादृशस्य ज्ञाननिवर्त्यत्वस्य स्वाव्यवहितोत्तरक्षणोत्पन्नज्ञाननाश्येषु पूर्वक्षणोत्पन्नेषु ज्ञानेच्छाप्रयत्नादिषु ज्ञान-

प्रागभावे चाभावात् । पूर्वत्र निवर्त्यतायाः स्वोत्तरवर्तियोग्यविभुविशेषगुणत्वावच्छिन्नत्वेन, परत्र च तस्याः प्रतियोगित्वावच्छिन्नत्वेन निवर्त्यतयोस्तयोर्ज्ञानत्वावच्छिन्नत्वाभावात् । न चैवं सति "भूयश्चान्ते विश्वमायानिवृत्तिः" इति श्रुत्या ब्रह्मज्ञानेनाज्ञानिकस्य विश्वस्यापि निवृत्तिश्रवणेन ज्ञाननिवर्त्यत्वस्याज्ञान इवाज्ञानिकेष्वपि गतत्वादतिव्याप्तिरिति वाच्यम्, निर्वर्त्यतायां साक्षात्त्वस्यापि विवक्षिततया आज्ञानिकानां निवृत्तेरज्ञाननिवृत्त्यधीनतया साक्षाज्ज्ञाननिवर्त्यत्वस्याज्ञानिकेष्वभावात् । परिणामपरिणामिनोरभेदाभ्युपगमेनाज्ञानिकानामप्यज्ञानत्वेन तेषामप्यविद्यालक्षणलक्ष्यत्वाच्च । न चाज्ञानिकानामप्यविद्यालक्षणलक्ष्यत्वाभ्युपगमे उत्तरवर्त्तिज्ञाननिवर्त्यानां ज्ञानेच्छाप्रयत्नादीनामज्ञानिकतयाऽविद्यालक्षणलक्ष्यत्वेन, अविद्यालक्षणेऽनादित्वानुक्तौ तेष्वव्याप्तिदानं तर्हि कथं सङ्गच्छेताचार्यचित्सुख-मुनिमधुसूदनादीनामपीति वाच्यम्, अध्यासकारणभूताया एवाविद्याया विवेच्यतामभ्युपगम्य तथा प्रतिपादनात् । आज्ञानिकानां च सर्वेषां व्यावहारिकप्रातिभासिकानां स्वयमेवाध्यस्ततया स्वस्वरूपेणाध्यासकारणताया अभावात् । न च व्यावहारिकेषु शुक्त्यादिषु प्रातिभासिकशुक्तिरूप्याद्यध्यासदर्शनेन कथं नाध्यासकारणत्वम्; चैतन्यात्मके ब्रह्मणि कल्पिततयाऽध्यास्तानां व्यावहारिकाणामिति वाच्यम्, परमार्थसत एवाधिष्ठानत्वनियमेन शुक्त्याद्यवच्छिन्नचैतन्य एव शुक्तिरूप्याद्यध्यासः, नाध्यस्तेषु शुक्त्यादिष्वित्येवं वेदान्तसिद्धान्तादध्यस्तानामध्यासाधिष्ठानतावच्छेदकत्वेऽप्यध्यासकारणताया वक्तुमशक्यत्वात् । एवं च यदज्ञानेन निवर्त्यते तदज्ञानमित्यपि निरूपणमविद्यायाः सङ्गतिमद् भवत्येवेत्यासामिदानीं निरूपणेनाविद्याविषयकेणैतावतैवाध्यासस्याप्यत्र संक्षेपेण निरूपणीयतयाऽविद्याकार्यस्य ।

## अथाध्यासनिरूपणम्

अधिष्ठानस्याज्ञानं प्रतिभासप्रातिभासिकाकाराभ्यां परिणमत इति वेदान्तसिद्धान्तानुसारिणी वस्तुस्थितिः । स एवाज्ञानपरिणामभूतः प्रतिभासो विवक्षितो भवत्यध्यासपदवाच्यतया । अज्ञानमेवाविद्येति तु निरूपितपूर्वम् । अधिष्ठानभूतस्य शुक्त्यवच्छिन्नचैतन्यस्यावरकं शुक्तित्वप्रकारकमज्ञानं चाकचिक्यादिसंदर्शनसमुद्बोधितरजतसंस्कारसहकृतं रजताकारेण इदं रजतम् इति रजतज्ञानाभासाकारेण च परिणमते । तत्रेदं रजतमित्येवं जायमानो रजतज्ञानाभासोऽसावध्यासरूप एव भवति, यद्वशादेव रजतार्थी कश्चिदविपश्चित् तदभिमुखप्रवृत्तिरूपं शब्दप्रयोगरूपं वा व्यवहारं प्रकुर्वन् विलोक्यते तत्र तत्र । परिस्थितिमिमां समुपादायोदाहरणत्वेन शक्यन्त एव बोद्धुमध्यासाः सर्वे साधुतया । एवम्भूतमध्यासमेव सर्वं मनसि लक्ष्यत्वेनाधाय प्राहुरध्यासलक्षणं तत्रभवन्तो वेदान्तदर्शनभाष्यकाराः श्रीमन्तश्शङ्कराचार्यपादाः 'स्मृतिरूपः परत्र पूर्वदृष्टावभासः' इति ।

अत्रावभासे स्मृतिरूपत्वमसन्निकृष्टविषयकत्वरूपं बोध्यम्। तथा चैतद्विशेषणस्यानुक्तौ समीचीनज्ञानतयाऽनध्यासभूतायां प्रत्यभिज्ञायां 'स एवायं नागः' इत्यादावध्यासलक्षणस्यातिव्याप्त्यापत्तिः। स्मृतिरूपत्वविशेषणदाने च सर्वासां प्रत्यभिज्ञानां नियमतः सन्निकृष्टविषयकत्वेनासन्निकृष्टविषयकत्वरूपस्य स्मृतिरूपत्वस्य प्रत्यभिज्ञायामभावेन लक्षणागमनान्नातिव्याप्त्यवकाशः। न च तत्कालतद्देशयोरपि प्रत्यभिज्ञाविषयतया तयोश्च तदानीं सन्निकृष्टत्वेन तत्कालतद्देशावसन्निकृष्टत्वेनादायासन्निकृष्टविषयकत्वमपि प्रत्यभिज्ञायामक्षुण्णमेवेति तद्विशेषणदानं "भक्षितेऽपि लशुने न व्याधिशान्तिः" इति न्यायमनुधावतीति वाच्यम्, असन्निकृष्टविषयकत्वपदेन सन्निकृष्टविषयकत्वसामान्याभावस्य विवक्षितत्वात्। नहि प्रत्यभिज्ञायां तादृशः सामान्याभावस्तिष्ठतीति शक्यते वक्तुम्। अतीतकालतद्देशातिरिक्तानां विषयाणां सन्निकृष्टत्वात्। न चैवं सति शुक्तिकादिविशेष्यके तादात्म्येन रजतादिविषयके "इदं रजतम्" इत्याद्यध्यासेऽपि सन्निकृष्टविशेष्यकत्वस्य विद्यमानतया सन्निकृष्टविषयकत्वसामान्याभावस्याभावेनाव्याप्तिरिति वाच्यम्। सन्निकृष्टविषयकत्वाभाव इत्यस्य सन्निकृष्टविधेयकत्वाभाव इत्यर्थकत्वात्। तथा च प्रत्यभिज्ञायां तादात्म्येन विधेयभूतस्य नियमतः सन्निकृष्टत्वेन भ्रमस्थले च विधेयस्य तथाभूतस्य नियमतोऽसन्निकृष्टत्वे नातिव्याप्त्यव्याप्त्योरनवकाशः स्मृतिरूपत्वविशेषणदानेनावभासे।

वस्तुतस्तु वेदान्तसिद्धान्ते रजतादिविभ्रमस्थले इदंवृत्तिरजतवृत्त्योर्भेदाभ्युपगमेनाध्यासत्वस्य च वृत्तिधर्मत्वाभ्युपगमेन वस्तुतो रजतादिवृत्तरूपे नन्वध्यासेऽसन्निकृष्टविषयकत्वं स्वत एव सम्पद्यते साधीयस्तयेति समवगन्तव्यं रहस्यम्। न च 'इदं रजतम्' इत्यादौ वृत्तिद्वित्वाभ्युपगमे ज्ञानैक्याधिगमः कथमिति वाच्यम्, वृत्तिद्वयप्रतिबिम्बितस्य चित एव वेदान्तसिद्धान्ते ज्ञानपदार्थतया तदैक्यादेव तथा प्रतीतेः।

न च स्मृतिरूप इत्युक्त्या कथमर्थोऽयं शक्यः समुपलब्धुमिति वाच्यम्। स्मृतिरूप इत्यस्य स्मृतेः रूपमिव रूपं यस्येति व्याख्यानुसारेण तथा सम्भवात्। स्मृतेः रूपम् अर्थव्यभिचारः। नियमेन भवत्येवासौ भ्रमज्ञाने तावदध्यासपदवाच्चे। व्यभिचारिणि चार्थे सन्निकर्षाभावेन स्मृतिरूपत्वं फलतोऽसन्निकृष्टविषयकत्वे समेति पर्यवसानमिति भावः।

परत्रेत्यत्र परत्वमनध्यस्तत्वं विवक्षितम्। तेनाध्यासाधिष्ठानेन परमार्थसतैव भवितव्यमिति वेदान्तनिर्णयः सूच्यते। न च कथमेवमिति वाच्यम्, अन्यथा ब्रह्मणि जगदध्यासस्थलेऽप्यधिष्ठानभूतस्य ब्रह्मणोऽप्यध्यस्ते क्वचिदन्यत्राध्यस्ततयाभ्युपगन्तुं शक्यत्वेन परमार्थसदद्वैताभावप्रसङ्गात्। अत एव शुक्त्याद्यवच्छिन्नचैतन्य एव रजताध्यासः स्वीक्रियते नाध्यस्ते शुक्तिकादौ।

न चान्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येति भाष्यविरोधापत्तिः; ततो ब्रह्मणोऽपि जगत्यध्यस्ततताया अन्योन्याध्यासाभ्युपगमप्राप्तत्वादिति वाच्यम्, अन्योन्याध्यासाभ्युपगमेऽपि ब्रह्मणि जगत्संसर्गाध्यासस्यैवाभ्युपमेन जगत्संसर्गस्याध्यस्तत्वेऽपि ब्रह्मणोऽनध्यस्तत्वाक्षतेः। न चाभ्युपगमस्यैवंविधस्याप्रामाणिकत्वमिति वाच्यम्, "सदेव सौम्येदमग्र आसीत्", "एकमेवाद्वितीयम्", 'नेह नानास्ति किञ्चन" इत्यादिश्रुतेः प्रमाणतया प्राप्तेः।

एतेन स्वाप्नविभ्रमाव्याप्तिः। तत्र जाग्रच्छुक्तिरजतादिविभ्रमस्थले शुक्तिकादेरिव परस्याध्यासाधिष्ठानस्यानुपलब्धेरित्यपि प्रत्युक्तं वेदितव्यम्। परत्रेत्यत्र परपदस्यानध्यस्तार्थकताया अव्यवहितमेवोक्ततया आत्मचैतन्यस्यैव तथाविधस्य स्वाप्नाध्यासाधिष्ठानतासम्भवात्। एवमेव च—"स्वाप्नज्ञानस्यापि स्मृतिविभ्रमरूपत्वात्। तत्रापि हि स्मर्यमाणे पित्रादौ निद्रोपप्लववशादसन्निधानापरामर्शे तत्र तत्र पूर्वदृष्टस्यैव हि सन्निहितदेशकालत्वस्य समारोपः" इति स्वाप्नज्ञानस्याध्यासत्वोपपादकं भामतीवचनमपि साधु सङ्गच्छते, पितृपदस्य पुंस्त्वसमानाधिकरणजनकतावच्छरीराद्यवच्छिन्नचैतन्यपरत्वात्। "बहिर्निर्गच्छदत्यच्छनयनरश्मिसम्पृक्तपित्तद्रव्यवर्त्तिनीं पीततां पित्तरहितामनुभवन् शङ्खं च दोषाच्छादितशुक्लिमानमनुभवन् पीततायाः शङ्खसम्बन्धमननुभवन्, असम्बन्धग्रहणसारूप्येण, पीतं तपनीयपिण्डम्, पीतं बिल्वफलमित्यादौ पूर्वदृष्टं सामानाधिकरण्यं पीतत्वशङ्खत्वयोरारोप्यत इति पीतः शङ्ख इति" इति पीतः शङ्ख इति बुद्धेरध्यासत्वोपपादकेऽपि मिश्रवाचस्पतिवाक्ये पीतत्वशङ्खत्वयोरित्यस्य तत्तदवच्छिन्नचैतन्ययोरित्यर्थकत्वम्, "विज्ञातृपुरुषाभिमुखेष्वादर्शादिषु स्वच्छेषु चाक्षुषं तेजो लग्नमपि बलीयसा सौर्येण तेजसा प्रतिस्रोतः प्रवर्त्तितं मुखसंयुक्तं मुखं ग्राहयत् पूर्वदृष्टादर्शोदकदेशतामाभिमुख्यं च मुखस्यारोपयतीति प्रतिबिम्बभ्रमोऽपि लक्षितो भवति" इति प्रतिबिम्बभ्रमस्याध्यासतोपपादके तद्वचने मुखस्येत्यस्य मुखावच्छिन्नचैतन्यस्येत्यर्थकत्वम्। तेन नासङ्गतिभीतिः।

यद्वा, परत्रेत्यत्र परत्वं प्रकृतारोप्यसत्ताधिकसत्ताकत्वरूपमादायासङ्गतिः कथञ्चिद् वारणीयाऽभ्युपगमसिद्धान्तमाश्रित्य। प्रोक्तभामतीवाक्यघटकपितृपीतत्वशङ्खत्वमुखपदवाच्यानामपि व्यावहारिकत्वेन लौकिकपारमार्थिकसत्ताकतया, आरोप्याणां तेषां तत्र तत्र सन्निहितदेशकालत्वसामानाधिकरण्यादर्शोदकदेशताभिमुख्यानां चाव्यावहारिकत्वेन प्रातिभासिकसत्ताकतयाऽध्यासाधिष्ठानतया प्रोक्तानां पितृपीतत्वादीनामारोप्यसन्निहितदेशकालत्वादिसत्ताधिकसत्ताकत्वरूपस्य परत्वस्योपपादनार्हत्वात्।

वस्तुतस्तु "स्मृतिरूपः परत्र पूर्वदृष्टावभासः" इति भाष्यग्रन्थे 'अवभास' एतावन्मात्रस्याभासलक्षणपरत्वम्। अन्येषां पदानां तत्रत्यपरिस्थितिपरिचायकत्वमात्रमवसेयम्।

तथा चावमतोऽवसन्नो वाभासोऽवभास इति व्युत्पत्त्याऽवभासत्वमेवाध्यासलक्षणम्। भासो ज्ञानम्। तत्रावमतिरवसादो वा बाध्यत्वम्। तथा च बाध्यज्ञानत्वमेवाध्यासत्वमिति लभ्यते।

बाध्यत्वं च ज्ञानस्य नानुत्पत्तिः, अधिष्ठानतत्त्वसाक्षात्कारात् पूर्वमेव भ्रमात्मकस्याध्यासस्य तस्योत्पत्तेः। नाप्यप्रमात्वप्रकारकबुद्धिविशेष्यत्वम्। सर्वत्र भ्रमोत्तरं तादृशबुद्धेरनियमेन तादृशबुद्धयव्यवहितपूर्वत्वाभाववत्यध्यासेऽव्याप्त्यापत्तेर्दुर्वारत्वात्। किन्त्वनिर्वचनीयविषयकत्वम्। विषयेष्वनिर्वचनीयत्वं च पारमार्थिकसत्त्वाऽसत्त्वाभ्यां निर्वक्तुमनर्हत्वम्। सत्तात्रैविध्योपगमपक्षे सर्वे व्यावहारिकाः प्रातिभासिकाश्च तथाविधसत्त्वासत्त्वाभ्यां निर्वक्तुमनर्हाः। अद्वैताश्रुतिविरोधेन तेषु पारमार्थिक्याः सत्तायाः, प्रतीयमानत्वेनासत्तायाश्चानभ्युपगमात्। सत्ताद्वैविध्यमात्राभ्युपगमपक्षे तु प्रातिभासिकानामेव परमार्थसद्ब्रह्मापरमार्थसत् खपुष्पादिभिन्नतया तथाविधं सम्पद्यतेऽनिर्वाच्यत्वम्। विषयगतमनिर्वाच्यमिदमभिसन्धायैवाद्वैतवेदान्तिनः खलु सर्वे स्वीकुर्वन्त्यध्यासानां समेषामनिर्वचनीयाख्यातिरूपत्वमेव नान्यख्यातिरूपत्वम्।

यद्यत्र कश्चिदेवं ब्रूयात्—शुक्तिरूप्यादिविभ्रमाणामनिर्वचनीयख्यातित्वमनुपपन्नम्। धर्माणां निराश्रयतानभ्युपगमेन शुक्तौ रजतादिविभ्रमस्थले च रजतोत्पादकानामवयवानामभावेन रजतोत्पत्त्यभावाद् हट्टस्थस्यापि च रजतस्य तत्राभावात् किमाश्रयीकुर्यात् प्रातिभासिकसत्त्वमनिर्वचनीयत्वं वा? येन विभ्रमस्य स्यात् तस्य तथाविधस्यान्यस्य वाऽनिर्वचनीयख्यातित्वमिति। तर्ह्येवं तत्र स्यात् प्रतिवक्तव्यं यद् द्विविधो हि भवति कार्यकारणभावो लौकिकोऽलौकिकश्च। तयोर्मध्ये लौकिको हि कार्यकारणभावस्तत्रैवाप्नोत्यपेक्षणीयतां यत्रापेक्षिता भवति लौकिकस्यैवोत्पत्तिः कार्यस्य। अलौकिकस्य कार्यस्योत्पादस्थले तु नासौ भवत्यपेक्षितः, "यादृशी शीतला देवी तादृशं तस्य वाहनम्" इति न्यायेन लौकिककार्योत्पत्तिस्थल एव लौकिकसामग्र्यपेक्षाया उचितत्वात्। एवं च प्रातीतिकस्य शुक्तिरूप्यादेः क्रियात्मकव्यवहाराविषयतयाऽलौकिकत्वेन रजतावयवात्मकस्य लौकिकरजतकारणस्याभावेऽपि शुक्त्यवच्छिन्नचैतन्याज्ञानरूपस्यालौकिककारणस्य सत्तयाऽलौकिकरजतोत्पत्तौ बाधकाभावः। एवमेवान्यत्राप्यवगन्तव्यम्। एवं च तथाविधस्य प्रातीतिकरजतादेरेव प्रातिभासिकसत्त्वानिर्वचनीयत्वयोराश्रयतया न तयोर्निराश्रयताऽऽक्षेपावकाश इति।

बौद्धानां मध्ये सर्वशून्यतावादिनो हि माध्यमिका विभ्रमाद्यपराभिधमध्यासमिममनिर्वचनीयख्यातिरूपमनभ्युपगच्छन्तस्सौषुप्तिकीमेव परिस्थितिं वास्तविकीं मन्यमानास्तद्दृष्टान्तेन स्वप्नजागरयोरपि ख्यातिख्येययोरुभयोरसत्त्वं पश्यन्तः, असतः ख्यातिः, ख्यातिश्चासतीत्यभिप्रायेणासत्ख्याति-

रूपमेव स्वीकुर्वते। परन्तु प्रवृत्तिगतयोः साफल्यवैफल्ययोः ख्यातिगते प्रमात्वाप्रमात्वे परिहाय प्रयोजकान्तरस्य वक्तुमशक्यतया नाभ्युपगन्तुं शक्यं कथञ्चिदपि ख्यातिख्येयानामसत्त्वं समेषामिति नोक्तयुक्त्या विभ्रमस्याध्यासस्यासत्ख्यातित्वम्। तत्र ख्येयानां ख्येयत्वेनैव न खपुष्पतुल्यतेति कथमसत्ख्यातित्वं युज्येताध्यासानाम्? ख्यातिश्च स्वरूपसती नोपयाति बाधितत्वमपीति न युज्यते मतं कथमपि तेषाम्।

ख्येयानां समेषामसत्त्वे दृढनिष्ठा अपि ख्यातेस्सत्त्वमुपगच्छन्तो वैनाशिकास्तु बौद्धाः स्वाप्नीं परिस्थितिमेव वास्तविकीं मन्यमाना अध्यासमात्मख्यातिरूपं मन्यन्ते। आत्मन एव ख्यातिः ख्यातिरपि चात्मैवेति तेषां सिद्धान्तादान्तरिकी हि ख्यातिः सत्तया क्षणिकत्वमादधती साकाराद्बहिष्ठ्वत्तयावभासते सर्वत्र बाह्यज्ञानस्थले। बाह्यतया भासमाना अपि ते ते घटपटादयो यतस्तत्त्वत आत्मभूतख्यातिरूपा एव न ख्यात्यात्मबहिर्भूतास्ततः सर्वासां ख्यातीनामात्मख्यातिता भवत्येव बलादापतिता साम्येनेति तेषामभिप्रायः। परन्त्वत्रापि मते दृष्टशुक्तिरूप्यप्रतीत्यवहितोत्तरजायमानयोः साफल्यवैफल्ययोः सम्पादनं बहिष्ठ्वान्तरिकत्वयोर्निर्वचनं च सर्वथा दुर्घटमेवेति नास्यापि मतस्यादरणीयता।

प्राभाकराः सांख्याश्चाध्यासस्थले नियमेनोद्देश्यप्रत्यक्षविधेयस्मृतिरूपं ज्ञानद्वयम्, तयोर्ज्ञानयोस्तद्विषययोश्च भेदाग्रहं तदधीनमेव च प्रवृत्त्यादिलोकसिद्धव्यवहारं जायमानं कल्पयन्तोऽध्यासं ख्यातिमात्रं मन्यन्ते। उदाहरणद्वारा मतमेतदेवं शक्यते साधुतया ज्ञातुं यत्—शुक्ताविदं रजतमिति प्रतीतिस्थले, इदमिति प्रत्यक्षात्मकं ज्ञानमेकं रजतमिति च स्मरणात्मकं ज्ञानमपरं भवति, न शुक्तिरजतयोरुद्देश्यविधेयभावापन्नतयैकमेव भवति ज्ञानम्। रजतार्थिनः कस्यचिदेवं ज्ञानद्वये ज्ञाते ज्ञानयोस्तयोः प्रत्यक्षस्मृतिरूपयोः, तद्विषयभूतयोश्शुक्तिरजतयोश्च वर्तमानस्य भेदस्याग्रहे च विद्यमाने, भवति प्रवृत्तिः प्राप्तये रजतस्य शुक्त्यभिमुखमिति परिस्थितिर्वास्तविकी। ततश्शुक्तिरजतभेदाग्रहादेव भवति तत्र प्रवृत्तिरिति न वक्तुं शक्यं शुक्तिरजतयोर्विशिष्टज्ञानस्य प्रयोजनं किमपि, यस्याध्यासत्वं स्यादङ्गीकरणीयमिति।

परन्त्वख्यातिवादोप्ययं तेषामितो हेतोर्नावहति मनोरमतां यद् भेदाग्रहस्य प्रवृत्तिहेतुतायां स्वीकृतायां सुषुप्तावपि प्रवृत्त्यापत्तिर्दुर्निवारतामावहेत्। भेदाग्रहस्य भेदज्ञानाभावरूपतया सुषुप्तौ तस्य सुलभत्वात्। न च तथाविधज्ञानद्वयसंवलितस्य भेदाग्रहस्य प्रवर्त्तकत्वम्; न केवलस्य तस्येति न सुषुप्तौ प्रवृत्त्यापत्तिरिति वाच्यम्, तादृशज्ञानद्वयात् पूर्वमपि विद्यमानेन भेदाग्रहेण

प्रवृत्त्युत्पादादर्शनेनान्वयव्यतिरेकविरहेण भेदाग्रहे प्रवृत्तिकारणत्वस्यैवाभावात्। न च तथाविध-ज्ञानद्वयसंवलितस्य तथाविधभेदाग्रहस्यान्वयव्यतिरेकावक्षताविति वाच्यम्, तथाविधस्थले विनि-गमकाभावेनान्वयव्यतिरेकौ तौ भेदाग्रहसंवलितज्ञानद्वयविश्रान्तावित्यस्यापि साधु वक्तुं शक्यतया भेदाग्रहसंवलितस्य तथाविधस्य ज्ञानद्वयस्यैव कुतो न कारणत्वमिति प्रश्नस्य दुरुद्धरतापातात्। न च तथैवास्त्विति वाच्यम्, तथा सत्यख्यातिवादत्यागप्रसङ्गात्। शुक्तावङ्गुलीनिर्देशपुरस्सरं जायमानस्येदं रजतमिति ज्ञानस्य प्रत्यक्षस्मृतिरूपप्रोक्तज्ञानद्वयताभ्युपगमस्यानुभवबाधितत्वाच्च।

नैयायिका वैशेषिका भाट्टा योगिनश्चाध्यासमन्यथाख्यातिरूपं मन्यन्ते। अन्यथा = अन्य-धर्मपुरस्कारेण, अन्यधर्मविशिष्टतयेत्यर्थः, ख्यातिः = ज्ञानम्, अन्यथाख्यातिरिति व्याख्यानुसारेण विशेष्यावृत्तिधर्मप्रकारकं ज्ञानं भवत्यन्यथाख्यातिः। शुक्तौ जायमानस्येदं रजतमिति विभ्र-मस्येदन्त्वावच्छिन्नशुक्तिनिष्ठविशेष्यतानिरूपितसमवायसम्बन्धावच्छिन्नरजतत्वनिष्ठप्रकारताकतया, तथाविधविशेष्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नरजतनिष्ठप्रकारताकतया वा रजतत्वस्य समवायेन रजतस्य च तादात्म्येन विशेष्यभूतायां शुक्तिकायामवर्तमानतया विशेष्यावृत्त्यप्रकार-कत्वेन सम्पद्यतेऽन्यथाख्यातित्वं मते तेषाम्। एवमेव चान्यत्राऽपि विभ्रमस्थलेऽवगन्तव्यं मता-श्रयणे तेषाम्। परन्तु मतमेतदपि तथा नाधत्ते स्वस्मिन्नाहरणीयतामितो हेतोर्यद् नार्हति भवितुं व्यापकमन्यथाख्यातित्वमध्यासत्वस्य। प्रात्यक्षिक्या विषयतायाः सन्निकर्षप्रयोज्यत्वनियमेन सन्निकर्षस्य च संयोगसंयुक्तसमवायादेर्हट्टस्थरजते घट्टस्थस्य शुक्तिरूप्यविभ्रमकर्तुश्चक्षुषोऽसत्त्वेन विषयताया अपि तस्या असम्भवेन, घट्टस्थायां शुक्तिकायां जायमानं रजतमिदमिति ज्ञानं हट्टस्थरजतविषयकं भवतीत्यस्य वक्तुमशक्यत्वं भवति सर्वथा यतः। न च ज्ञानलक्षणात्मकमलौ-किकं सन्निकर्षमादाय तथार्हति भवितुमित्यपि शक्यं वक्तुम्। तथा सति विधेयस्मृत्यात्मिकां ज्ञान-लक्षणां सन्निकर्षत्वेनोपादाय पर्वतो वह्निमानित्याद्यनुमितिस्थले विधेयभूतवह्न्यादावपि तत्सम्पत्त्या-ऽनुमितेरपि प्रत्यक्षतापत्तेः। अतोऽसन्निकृष्टारोप्यकस्य विभ्रमस्यानिर्वचनीयख्यातित्व-मेवोचितमिति।

शैवानां काश्मीरिणां विशिष्टाद्वैतिनां च रामानुजीयानां मतेऽध्यासस्य भवति सत्ख्या-तित्वम्। यतः शैवा हि ते खपुष्पादेरसतोऽपि मन्यन्ते सत्त्वमेव सर्वथा। विशिष्टाद्वैतिनश्च स्वीकुर्वन्ति शुक्तिकास्वपि रजतावयवानिति। परन्त्वनुभवविरुद्धतयोपेक्षणीयमेवैतन्मतद्वय-मत्र विषये।

यद्यपि सूक्ष्मेक्षिकया विहिते विवेचने प्रोक्तं प्राभाकरमतमपि भवति सत्ख्यातिपर्यवसितमेव, तथापि तन्मते खल्वख्यातेर्भवति व्यवहारकारणत्वम्। मतयोस्त्वनयोः स्वीक्रियते ख्यातेरेव व्यवहारकारणत्वं नाख्यातेरिति भूयान् भेदः।

एवं विहितायां विवेचनायां मतवादानामेषामनिर्वचनीयख्यातित्वमेवाध्यासस्य प्रतिभाति योग्यं स्वीकर्तुम्। न च सन्निकृष्टारोप्यकेषु विभ्रमेष्वन्यथाख्यातित्वस्याप्यभ्युपगम्यतया ख्यातिद्वयाभ्युपगमे गौरवापत्तिरिति वाच्यम्, आरोप्यसन्निकर्षासन्निकर्षयोरनुभवसिद्धतया गौरवस्यापि तथाविधस्यानुभवसिद्धत्वेनादोषत्वादित्यास्तामिदानीमेतावदेव।



# प्रपञ्चस्य मिथ्यात्वोपपत्तिः

श्री-अभेदानन्दः, एम० ए०, वेदान्ताचार्यः, प्राध्यापको गुरुकुलकांगड़ीविश्वविद्यालये।

'ब्रह्म सत्यं जगन्मिथ्या' इत्यद्वैतवेदान्तसिद्धान्तानुसारेणैकस्य सद्वस्तुनो ब्रह्मण एव सत्यत्वम्। सर्ववेदान्तवाक्यानां चाद्वैतब्रह्मण्येव तात्पर्यम्। "एकमेवाद्वितीयं ब्रह्म" इत्यादि-श्रुतेश्च चैतन्यमात्रप्रतिपादने तात्पर्यम्। चैतन्यमात्रस्य स्वप्रकाशतया नित्यसिद्धत्वात् तन्मात्र-प्रतिपादने श्रुतेरनुवादकत्वेनाप्रमाणप्रसङ्गात्, किन्तु द्वैताभावोपलक्षितब्रह्मप्रतिपादनपूर्वक-चैतन्यमात्रप्रतिपादने तादृशश्रुतेस्तात्पर्यम्, द्वैताभावविशिष्टचैतन्यप्रतीतिपूर्वकत्वाद् द्वैताभावोप-लक्षितचिन्मात्रप्रतीतेः। सा हि सर्वानर्थनिवृत्तिकरी। विशिष्टबोधानन्तरमेव ह्युपलक्षितबोधो जायते, उपलक्ष्यधर्मिबोधे उपलक्षणीभूतधर्मविशिष्टबुद्धेः कारणत्वात्। यः खलु धर्मी येन धर्मेणोप-लक्ष्यते तेन धर्मेण विशिष्टरूपतया स धर्मी यदि न प्रतीयेत, तर्हि नोपलक्षितबुद्धिर्जायेत। अत एव द्वैताभावोपलक्षितबुद्धौ द्वैताभावविशिष्टबुद्धेर्द्वारकत्वनिर्वाहः। द्वैताभावविशिष्टबुद्धेरप्यभाव-बुद्धित्वेन प्रतियोगिप्रसक्तिपूर्वकत्वम्, द्वैतवत्त्वबुद्धिपूर्वकत्वाद् द्वैताभाववत्त्वबुद्धेः। द्वैतप्रकारकबुद्धिं विना द्वैताभावप्रकारकबुद्धेरनुपपत्तिः, द्वैतवति ब्रह्मण्येव द्वैतवत्त्वकालावच्छेदेन द्वैताभाववत्त्व-विषयकबुद्धेरुदयात्। यत्कालावच्छेदेन यत् प्रसज्यते तत्कालावच्छेदेनैव तन्निषिध्यत इत्येव प्रतियोगिप्रसक्तिपूर्वकनिषेधबुद्धेर्मुद्रा।

'यः सर्वज्ञः सर्ववित्' इत्यादिब्रह्मलक्षणवाक्यानामपि द्वैताभावोपलक्षितनिर्विकल्पक-ब्रह्मनिश्चयजनकत्वात् तत्रापि द्वैतमिथ्यात्वपूर्वक एव तादृशबोधो बोद्धव्यः। एवं महावाक्य-जन्याद्वैतनिश्चयस्यापि द्वैतमिथ्यात्वसिद्धिपूर्वकत्वं विज्ञेयम्। अत एवोक्तमद्वैतसिद्धिकारेण[1]— "अद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वात्।" तथा च द्वैतमिथ्यात्वमेव द्वैतमात्रं पक्षीकृत्य तन्मिथ्यात्वमेव सदसत्त्वानाधिकरणत्वादिरूपमुपपत्त्या साधनीयम्।

तत्र[2] च "ब्रह्मप्रमातिरिक्ताऽबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हं चिद्भिन्नं प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगि न वा" इति विप्रतिपत्तौ न्यायमकरन्दकृतामानन्दभट्टारकाणामनुमानं

---

१. अद्वैतसिद्धिः, निर्णयसागर० पृ० ८।

२. अद्वैतसिद्धिः।

जगन्मिथ्यात्वे प्रस्तूयते। तथा हि—"[1]विमतं मिथ्या; दृश्यत्वात्, विमतं मिथ्या; जडत्वात्, विमतं मिथ्या; परिच्छिन्नत्वात्, त्रिष्वप्युदाहरणमेकमेव शुक्तिरूप्यवत्। अत्र च विमतमिति पक्षः, मिथ्येति साध्यम्, दृश्यत्वादिहेतुः। मिथ्यात्वं मिथ्यापदार्थतावच्छेदकविशिष्टं तादात्म्यसम्बन्धेन पक्षविशेषणतया निर्दिश्यते। प्रपञ्चरूपे पक्षे यत् तादात्म्यसम्बन्धेन सिषाधयिषितं तन्मिथ्यात्वं मधुसूदनस्वामिनाद्वैतसिद्धिग्रन्थे प्रदर्शितम्। "ननु[2] किमिदं मिथ्यात्वं साध्यते......" द्वैतवादिभिर्न्यायामृतकृद्भिर्मिथ्याशब्दार्था बहवः प्रदर्शिता दूषिताश्च। तथा हि मिथ्यात्वं च नात्यन्तासत्त्वं सिद्धान्तिनामपसिद्धान्तापातात्; नापि सद्विविक्तत्वं सतोऽपि सदन्तरविविक्तत्वात्, नापि भ्रान्तिविषयत्वम्, ब्रह्मणोऽप्यधिष्ठानत्वेन भ्रान्तिज्ञानविषयत्वात्; नाप्यनिर्वाच्यत्वं जगत्सत्यत्ववादिनाऽनिर्वाच्यत्वानङ्गीकारेण तं प्रति साध्याऽप्रसिद्धेः। इत्येवं प्रकारैराक्षेपैर्द्वैतवादिन्यायामृतकारैः प्रत्यक्तत्त्वकाराणां चित्सुखाचार्याणाम्, पञ्चपादिकाकाराणां पद्मपादाचार्याणां च मिथ्यात्वलक्षणेषु दोषाः प्रदर्शिताः; परन्तु परवर्तिकाले मधुसूदनस्वामिभिरद्वैतसिद्धिनामकग्रन्थे द्वैतवादिनां सर्वेषामाक्षेपाणामुत्तराणि दत्त्वा चित्सुखाचार्यादीनां मिथ्यात्वस्य पञ्चलक्षणानि युक्तिभिः स्थापितानि।

शङ्करोत्तराद्वैताचार्याः स्वीकुर्वन्ति यद् मिथ्यात्वलक्षणस्य प्रस्ताव आचार्यशङ्करपादैरध्यासभाष्ये—"अध्यासो[3] मिथ्येति भवितुं युक्तम्" इत्युपन्यस्तः। आचार्याणामेतद् वचनमवलम्ब्यैव पद्मपादाचार्यैस्तदीयपञ्चपादिकायामुक्तम्—"[4]मिथ्याशब्दो द्व्यर्थः—अपह्नववचनोऽनिर्वचनीयतावचनश्च।" प्रथमार्थेऽध्यासो मिथ्या, अर्थात् चिदचिद्रूपग्रन्थिद्वयस्याध्यासो न सम्भवतीति। द्वितीयार्थेऽध्यासोऽनिर्वचनीय इति। अनिर्वचनीयत्वं च—न सत्, नाऽसत्, नापि सदसद्रूपम्। यद् वस्तु सद्रूपेणाऽसद्रूपेण सदसद्रूपेण वा न निरूपणीयं तदेवाऽनिर्वचनीयम्। अनिर्वचनीयमेव मिथ्या। अर्थात् सदसद्विलक्षणत्वं मिथ्यात्वमिति तात्पर्यं भवति। इयमेव दृष्टिभङ्गी मिथ्यात्वनिरूपणे पद्मपादाचार्याणाम्। पञ्चपादिकाकाराणामिदं लक्षणं मिथ्यात्वलक्षणेषु पञ्चमलक्षणरूपेण स्वकीयग्रन्थे तत्त्वप्रदीपिकायामुपन्यस्तं चित्सुखाचार्यैः। प्रतिवादिद्वैतवेदान्तिप्रभृतयः सत्त्वासत्त्वयोरुभयोरनधिकरणं वस्तु न प्रसिद्धमिति कृत्वा पूर्वोक्तलक्षणेऽसङ्गतिं प्रदर्शित-

---

१. न्यायमकरन्दः।

२. अद्वैतसिद्धिः।

३. ब्रह्मसूत्रे शङ्करभाष्यम्।

४. पञ्चपादिका।

वन्तः । अस्मिन् प्रसङ्गेऽद्वैतवादिनः कथयन्ति यन्न सद् भवति तदसद् भवतीत्यपि न, नाप्यसन्न भवतीति सद् भवति । सत्त्वासत्त्वयोरनधिकरणं वस्तु न भवतीति नास्माकं मतम् । सत्त्वासत्त्वयोरभाव एकस्मिन् धर्मिणि भवितुमर्हति । तच्चानुमानेन साध्यते—"[1]सदसत्त्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी धर्मत्वात्, रूपरसवत् ।" रूपरसौ पृथिवीजलयोर्धर्मौ, तयोश्चाभावो वायौ दृश्यत एव । प्रतिवादिपक्षे किन्तु सत्त्वासत्त्वधर्मौ परस्परविरहरूपौ विरुद्धौ स्वीकृतौ; अद्वैतमते तु न तयोः परस्परविरहरूपता । त्रिकालाबाध्यं सत्त्वम्, तत् त्वेकमात्रं ब्रह्मवस्त्वेव । एवं च यन्न कस्मिन्नपि काले भाति, प्रतीतिविषयं वा याति तदसत्, यथाकाशकुसुमम्, बन्ध्यापुत्रश्च । उक्तं चाद्वैतसिद्धौ—"[2]त्रिकालाबाध्यत्वरूपसत्त्वव्यतिरेको नाऽसत्त्वम्, किन्तु क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वम्" 'अयं बन्ध्यापुत्रो याति, इदमाकाशकुसुमं सुरभि' इत्याकारकः कथमप्यनुभवो न भवति । यत्तु मिथ्या तत् प्रतीयत एव । यथा शुक्तौ रजतं मिथ्या परन्तु तन्नासत्, तस्य प्रतीतिविषयकत्वात् । सत्त्वासत्त्वयोर्मध्ये मिथ्यात्वस्यैका कोटिर्विद्यते । शुक्तौ यद् रजतं शुक्तिज्ञानेन तस्य बाध्यत्वान्न तत् सत्त्वम्, तत्र त्रिकालाबाध्यत्वरूपसत्त्वस्याभावात् । एवमेव 'आमुक्तेः संसारः' इति कथनाद् दृश्यप्रपञ्चस्यापि सदसद्विलक्षणत्वेन ब्रह्मज्ञानबाध्यत्वेन मिथ्यात्वं सिद्धम् । यथा गोत्वं गवि वर्तते, अश्वत्वस्य तत्राभावः । एवं चाश्वत्वमश्वे गोत्वस्य तत्राभावः, परन्तु गोत्वाश्वत्वयोरुभयोरभाव एकस्मिन् गजे घटत एव । अत्रापि सत्त्वं ब्रह्मणि, असत्त्वं खकुसुमे, सत्त्वासत्त्वयोरभावरूपं मिथ्यात्वं प्रपञ्चे घटते । पञ्चपादिकोक्तेऽस्मिन् मिथ्यात्वलक्षणे सदसद्विलक्षणत्वरूपस्य साध्यस्याप्रसिद्धिरूपदोषः प्रदर्शितः प्रतिवादिभिः । अतः पञ्चपादिकाविवरणकारैः प्रकाशात्मयतिपादैर्मिथ्यात्वस्यापरं लक्षणं प्रदर्शितम्—"[3]प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वम्, अथवा प्रतिपन्नोपाधावभावप्रतियोगित्वमेव मिथ्यात्वं नाम ।" अस्य लक्षणस्य साररूपमेव चित्सुखाचार्यैः स्वकीयग्रन्थ उपन्यस्तम्—

सर्वेषामेव भावानां स्वाश्रयत्वेन सन्यते ।
प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता[4] ॥

---

१. चित्सुखी, मिथ्यात्वलक्षणविचारः ।

२. अद्वैतसिद्धिः, ५०-५१ पृ०, निर्णयसागर० ।

३. प्रकाशात्मयतिकृतं पञ्चपादिकाविवरणम् ।

४. तत्त्वप्रदीपिका ( चित्सुखाचार्यकृता ), ३९ पृ० ।

अर्थात्—आश्रयभूतवस्तुन्येवाश्रितस्य वस्तुनोऽत्यन्ताभावो यदोपलभ्यते, तदा तस्य मिथ्यात्वम्। त्रैकालिकनिषेधश्चात्यन्ताभाव एव। उपर्युक्तलक्षणे स्वाश्रयत्वेन सन्यते, अर्थात् 'प्रतिपन्नोपाधौ' इति ग्रहणादाकाशकुसुमादावसद्वस्तुनि लक्षणस्य नातिव्याप्तिः, आकाशकुसुमादेः कस्मिन्नपि काले कस्मिन्नपि वस्तुन्याश्रितत्वमेव नास्ति। अद्वैतमते मिथ्याभूतवस्तु सर्वदा सदाश्रित भवति। ब्रह्मसत्ताद्वारानुप्राणितं सर्वं मिथ्याभूतं प्रपञ्चजातम्। सद्वस्तु ब्रह्मैव सर्वदृश्यानामधिष्ठानम्। मिथ्यावस्तु कदाप्यनाश्रितं न भवति; अनाश्रितं तु सद्वस्त्वेव। सुतरामाकाशादिप्रपञ्चे लक्षणस्य नाऽव्याप्तिः। ब्रह्मणश्चानाश्रितत्वेन तत्रापि लक्षणस्य नातिव्याप्तिः। लक्षणे प्रतिपत्तिर्न प्रमारूपा, नापि भ्रान्तिरूपा, किन्तु भ्रमप्रमासाधारणी प्रतीतिरेव। तेन प्रतिपन्नत्वं प्रतीतिविषयत्वमिति यावत्। अत्र शङ्कते—त्रैकालिकनिषेधः किंरूप इति। तथा हि—"[1]निषेधस्तात्त्विकोऽतात्त्विको वा? नाद्यः, अद्वैतभङ्गात्; न द्वितीयः, सिद्धसाधनत्वापत्तेः।" निषेधस्य च व्यावहारिकपक्षेऽद्वैतश्रुतिहानिः। 'नेह नानास्ति किञ्चन' इत्यादिश्रुतेर्व्यावहारिकमिथ्याभूतनिषेधप्रतिपादकत्वेनातत्त्वावेदकत्वं स्यात्। प्रातिभासिकत्वेऽपि सिद्धसाधनतेति दुर्वारैव।

अत्र वेदान्ताद्वैतवादिनामिदमुत्तरमनुसन्धातव्यम्—लक्षणे त्रैकालिकनिषेधस्यात्यन्ताभावस्य वा सत्यत्वे गृहीतेऽपि नाऽसङ्गतिर्भवति काचित्। सत्याधिष्ठानभूते ब्रह्मणि प्रपञ्चनिषेधस्याऽधिकरणरूपत्वात् सत्यत्वेऽपि नाद्वैतहानिः। प्रपञ्चनिषेधो ब्रह्मरूप एव, न तदतिरिक्तः। "[2]प्रपञ्चनिषेधाधिकरणीभूतब्रह्माभिन्नत्वान्निषेधस्य तात्त्विकत्वेऽपि नाद्वैतहानिकरत्वम्, न च तात्त्विकाभावप्रतियोगिनः प्रपञ्चस्य तात्त्विकत्वापत्तिस्तात्त्विकाभावप्रतियोगिनि शुक्तिरजतादौ कल्पिते व्यभिचारात्।" निषेधस्य व्यावहारिकत्वेऽपि न क्षतिः। न च निषेधस्य मिथ्यात्वेन तस्य प्रतियोगिघटादेः प्रपञ्चस्य वा सत्यत्वापत्तिः स्यात्, तत्र हि निषेधस्य निषेधे प्रतियोगिसत्त्वमायाति, यत्र निषेधस्य निषेधबुद्ध्या प्रतियोगिसत्त्वं व्यवस्थाप्यते न निषेधमात्रं निषिध्यते। यथा रजते नेदं रजतमिति ज्ञानानन्तरमिदं नाऽरजतमिति ज्ञानेन रजतं व्यवस्थाप्यते। यत्र तु प्रतियोगिनिषेधयोरपि निषेधस्तत्र न प्रतियोगिसत्त्वमायाति। यथा ध्वंससमये प्रागभावप्रतियोगिनोरुभयोरपि निषेधः। एवं प्रकृतेऽपि निषेधबाधकेन ब्रह्मज्ञानेन प्रतियोगिनः प्रपञ्चस्य तन्निषेधस्य च बाधान्न निषेधस्य बाध्यत्वेऽपि प्रपञ्चस्य तात्त्विकत्वम्, उभयोरपि निषेधतावच्छेदकस्य दृश्यत्वादेस्तुल्यत्वात्।

---

१. परपक्षगिरिवज्र०—१ म० अ० १२० पृ०।

२. अद्वैतसिद्धिः—९६-९९ पृ०, निर्णयसागर०।

